# ॥ निदान सूत्रम् ।

( सामवेदीयम् )

॥ ऋ षि - प्रो क्त मि द म् ॥

वसथश्रीसत्यव्रतसामश्रमिभट्टाचार्येण सम्पादितम्।

———•••———

कलकत्ता—सत्ययन्त्रतः

( १९—१, घोषेर् लेन )

ण्डितप्रवरचट्टोपाध्यायेन मुद्रयित्वा सम्पादकेन प्रकाशितम्।

॥ शाका: १८१८। संवत् १९५३। खी० १८९७॥

# ॥ अथ निदानसूत्रम् ॥

( सामवेदीयम् )

॥ ऋ षि - प्रो क्त मि द म् ॥



श्रीसत्यव्रतशर्म्मणा सम्पादितम् ।




कलकत्ता — सत्ययन्त्रतः

( १९—१, घोषेस् लेन )

संवत् १९५२, श्रीमहेन्द्रनाथसरकारेण मुद्रितम् ।

प्रकाशितञ्चैत एव सम्पादकेन ।

# ॥ अथ निदानसूत्रम् ॥

॥ अथ प्रथमः प्रपाठकः ॥

॥ ॐ ॥ अथातश्छन्दसां विचयं व्याख्यास्यामस्त्र-
यश्छन्दःपादा भवन्त्यष्टाक्षर एकादशाक्षरो द्वादशा-
क्षर इति ननु मित्रं दशाक्षरो ऽष्टाक्षर आ पञ्चाक्षर-
ताया प्रति क्रामति विश्वेषां हि त इत्या चतुर-
क्षरताया इत्येक आ दशाक्षरताया अभि क्रामति
अयं तदस्य सम्भृतं वस्विन्द्रेकादशाक्षर आ नवाक्षर-
तायाः प्रति क्रामति यदि वा दधि यदि वा नेत्या
ऽष्टाक्षरताया इत्येक आ पञ्चदशाक्षरताया अभि
क्रामति सत्रा दधान मप्रतिष्कुतं श्रवांसि भूरीति
द्वादशाक्षरस्त्र्यक्षरतायाः प्रति क्रामति अनूपे
गोमान् गोभिरक्षारित्यष्टाक्षरताया इत्येके आ
षोडशाक्षरताया अभि क्रामति विकर्षया त्वं वृक्षाणि
इएंसि च प्रतीत्येक इत्यार्विंत्या ऽष्टादशाक्षरताया
इत्येके ऽर्चामि सत्यसवं रत्नधा मभि प्रियं मतिं
कवि मित्यथा नो वृत्त्यप्रदेशो यत्र क्षत्र मक्षर सुपी-

चमं पादस्य ** सा जागती वृत्तिर्यत्र दीर्घं सा त्रैष्टुभी ह्रस्वाक्षरस्योपरिष्टाद् व्यञ्जनसन्निपाते ऽपि गौरव मष्टाक्षरद्वादशाक्षरौ लघुवृत्ती दशाक्षरैकाद-शाक्षरौ गुरुवृत्ती इत्येतैः खलु छन्दांऽसि वर्त्तन्ते पथ्यान्येवाग्रे सप्त चतुरुत्तराणि व्याख्यास्यामः ॥ १ ॥

चतुर्विंशत्यक्षरा गायत्री त्रिपादा ऽष्टाक्षरपादा ऽथापि चतुःपादा भवति षडक्षरपादा तद्यापि पञ्चाला उदाहरन्ति पेटी पालकं ते पेटा पिपिटकं ते तत्र ककुप् ****** परेष्टीत्यत्यष्टाविंशत्यक्षरो-ष्णिक्त्रिपदैः पूर्वावष्टाक्षरावुत्तमो द्वादशाक्षरो ऽथ यत्र मध्ये द्वादशाक्षरः सा ककुब् यत्र प्रथमः सा पुर-उष्णिग्‌गथापि चत्वारः सप्ताक्षरा इत्युदाहरन्ति नदं व ओदतीना मिति द्वात्रिंशदक्षरानुष्टुप् चतुःपादा ऽष्टाक्षरपादां ऽथापि त्रिपदा भवति मध्ये ऽष्टाक्षरो ऽभितो द्वादशाक्षरौ ताः पिपीलिकमध्येत्याचक्षते मध्येज्योतिरिति बह्वृचा एवं पादो यतो यतः परि-क्रामेत् तज्ज्योतिष मेतां ब्रुवीत पुरतोज्योतिर्मध्ये-ज्योति रुपरिष्टाज्ज्योतिरिति षट्त्रिंशदक्षरा बृहती चतुःपादैव त्रयो ऽष्टाक्षरा द्वादशश्च उपोत्तमो द्वादशाक्षरस्तां पथ्येत्याचक्षते ऽपि च स्कन्धोग्रीवे-

त्र्यथ यत्र प्रथमो द्वादशाक्षरः सा पुरस्ताद्बृहती यत्र द्वितीयः सोरोबृहती सैव न्यङ्कुसारिणी यत्रोत्तमः सोपरिष्टाद्बृहत्यथापि चत्वारो नवाक्षरा इत्युदाहरन्त्युपेद मुप पर्चन मित्यथापि त्रिपदा भवति द्वादशाक्षरपादाः प्रत्नं पीयूषं पूर्व्यं यदुक्थ्य मिति ताᳲ सतोबृहत्याचक्षते बार्हत मपि त्वचᳲ सतोबृहत्य इत्येवाचक्षते यथा वयं घ त्वा सुतावन्त इति ॥ २ ॥

चत्वारिᳲशदक्षरा पङ्क्तिः पञ्चपदा ऽष्टाक्षरपादा अथापि चतुःपादा भवति द्वादशाक्षरो ऽष्टाक्षर इति व्यत्यासं ताᳲ सिद्धा विष्टारपङ्क्तिरित्याचक्षते पर्यासे विपरीता सैवाथ यत्र पूर्वावष्टाक्षरावुत्तरौ द्वादशाक्षरौ सा ऽऽस्तारपङ्क्तिरास्तीर्णाविवैतौ पङ्क्तिपादावित्यथ यत्र पूर्वौ द्वादशाक्षरावुत्तरावष्टाक्षरौ सा प्रस्तारपङ्क्तिः प्रस्तीर्णाविवैतौ पङ्क्तिपादावित्यथ यत्र मध्ये ऽष्टाक्षरौ भवत्यभितो द्वादशाक्षरौ सᳲस्तारपङ्क्तिः सᳲस्तीर्णाविवैतौ पङ्क्तिपादावित्यथ यत्र मध्ये द्वादशाक्षरौ भवत्यभितो ऽष्टाक्षरौ सा विष्टारपङ्क्तिर्विमृष्टपादाविवैतौ पङ्क्तिपादाविति तत्र सिद्धा विष्टारपङ्क्तिर्बृहत्या वा ककुभो वोत्तरा भवति

तां प्रगाथा इत्याचक्षते अनुष्टुभा अपि प्रगाथा भवन्तीत्येके *अनुष्टुप् प्रथमा गायत्र्यावुत्तरे यथा* पुरो जिती वो अन्धस आ त्वा रथं यथोतये विशो विशो वो अतिथिं पान्त मा वो अन्धस इत्यथाक्षरपङ्क्ति र्या विंशत्यक्षराश्चतुःपदा पञ्चाक्षरा द्विपदा एना एके प्रतिजानते पञ्चविंशत्यक्षरा भवति पञ्चपदा पञ्चाक्षरपादा तां पदपङ्क्तिरित्याचक्षते ॥ ३ ॥

चतुश्चत्वारिंशदक्षरा त्रिष्टुप् चतुःपदैकादशाक्षरपादा अथ यत्रोत्तमो ऽष्टाक्षरस्तां ज्योतिष्मतीत्याचक्षते पञ्चपदापि भवति चत्वारो ऽष्टाक्षरा एको द्वादशाक्षरो ऽष्टाचत्वारिंशदक्षरा जगती चतुःपदैव द्वादशाक्षरपादा ऽथ यत्रोत्तमो ऽष्टाक्षरस्तां ज्योतिष्मतीत्येवाचक्षते पञ्चपदापि भवति त्रयोऽष्टाक्षरा द्वौ द्वादशाक्षरौ स एष समासश्चाष्टपदतायाः क्रमते सैषैवं सती विष्टारपङ्क्तेः प्रवृद्धपदा षट्पदापि भवत्यष्टाक्षरपादा उभे यदिन्द्र रोदसी इत्येतानि खलु सप्त चतुरुत्तराणि छन्दांसि व्याख्यातानि प्रथमं प्रथमं त्वेवात्र न्यायं पद्यं विद्यादेतासा मेव द्विपदा भवन्ति यत्र द्वावष्टा-

क्षरौ सा गायत्र्या यत्र द्वादशाक्षराष्टाक्षरौ सा विष्टारपङ्क्तिर्यत्रैकादशाक्षरौ सा त्रिष्टुभो यत्र द्वादशाक्षरौ सा जगत्या विषमपादा शम्पद म व इन्द्राय विश्वथेमा नु क मिति। नवाक्षरचतुर्दशाक्षरावेकादशाक्षरत्रयोदशाक्षरौ षडक्षरदशाक्षरावेकादशाक्षराष्टाक्षरौ दशाक्षरपादा विराज एकपदा प्रभृतयश्चतुःपदाश्च एकादशाक्षरपादा अपि त्रिपदा विराज इत्याचक्षते यथाग्निन्नर इति यथाग्निन्नर इति ॥ ४ ॥

अर्द्ध जगत्या अतिच्छन्दसौ द्वापञ्चाशदक्षरप्रभृतयश्चतुरुत्तरा द्वौ सप्तापवर्गौ चतुःशताक्षराणां पराध्यो तासां नामधेयानि विधृतिः शक्वर्यष्टिरत्यष्टिर्मण्हनासरित्सम्पेति पूर्वस्य सिन्धुः सलिल मम्भो गहन मर्णव आपः समुद्र इत्युत्तरस्य तान्यतानि सर्वाणि कृतच्छन्दाण्सि भवन्त्यथ प्राग्वि गायत्र्याः पञ्चकृतच्छन्दाण्सि कृतिश्चतुरक्षरा पङ्क्तिरष्टाक्षरा संकृति र्द्वादशाक्षरा विकृतिः षोडशाक्षरा अभिकृतिर्विंशत्यक्षरैः तासा मन्तरप्यन्तस्था छन्दाण्सि द्वाविंशताक्षरप्रभृतयश्चतुरुत्तरास्त्रयः सप्तवर्गा द्विशताक्षराणां पराध्या तासां नामधेयानि

राट् सम्राट् विराट् स्वराट् स्ववशिनी परमेष्ठा-न्तस्थेति पथ्यस्य मलं चामृतं च वृषा च जीवं च हृष्टं च रसस्य शुक्र मितुत्तरस्यार्षस्यासाधस्यांस्याश्च वार्याप उदक मितुत्तरस्य तान्येतानि सर्वाणि द्वापरच्छन्दांऽसि भवन्त्यथ प्राञ्चि द्वाविंशत्य-क्षरायाः पञ्चानूच्या छन्दांऽसि द्व्यक्षरप्रभृतीनि चतुरुत्तराणि स्पर्शीका सर्पीका मर्षीका सर्वमाचा विराट्कामेति ॥ ५ ॥

अथ निचृद्भुरिजौ या एकेनाक्षरेणोनास्ता निचृतो ऽथ या एकेन ज्यायस्यस्ता भुरिजस्तान्येतानि सर्वाणि त्रेताकलिच्छन्दांऽसि भवन्ति तद्यत् त्रेतास्थानं ता निचृतो ऽथ यत् कलिस्थानं ता भुरिजश्चतुष्टयेन छन्दो जिज्ञासेत पदैरक्षरैर्वृत्त्या स्थानेनेति तेषा मेके-कस्मिन् वृत्तिशेषेणैव जिज्ञासनदुष्टस्य छन्दसो नोन-वृत्तेर्वर्ग मस्तीति विद्यादथ देवासुरच्छन्दांऽस्येकाक्षर-प्रभृतीन्येको नूराणि रौहीणि देवच्छन्दांऽसि सप्ता-क्षरा जगत्यष्टाक्षरातिच्छन्दाः पञ्चदशाक्षरप्रभृतीन्ये-कापाश्चि प्रत्यवरीहीण्यासुरच्छन्दांऽसि नवाक्षरा जगत्यष्टाक्षरैवातिच्छन्दा अथ प्रजापतेश्छन्दांस्यष्टा-क्षरप्रभृतीनि चतुरुत्तराणि रौहिणी द्वाविंशदक्षरा

जगती षट्चिंशदक्षरातिच्छन्दास्तेषां त्र्यं त्र्यं
समेत्यैकैक मृषिच्छन्दो भवति तदेष श्लोकः कश्चित्
स्त्रो द्वात्तर मेकविंशतिः सप्त भूयान् भवति
कर्मभिः पञ्चाशतः पञ्च नपुंसकानां द्वे चाधिके
विंशति त्र्यत्तराणा मिति देवासुराणां छन्दोभि-
रात्मनश्च प्रजापतिः सप्तवर्गञ्चकारैक मृषीणां
यज्ञवोढवे यस्य कस्य च छन्दसः सम्पदं कश्चिदि-
च्छति चतुर्थं तस्य सङ्ख्याय तावतीराहरेदृचो यद्द-
तच्छन्द आहरेदन्यदस्य सम्पदे चतुर्थं तस्य सङ्ख्याय
विद्यात् तामावतीर्ऋचः ॥ ६ ॥

"अथावसानान्येकपदा द्विपदाना मन्ततो ऽवसानं
त्रिपदाप्रभृतीनां द्वावुक्त्वा शेष माह पट्पदाभ्यो
भवति तत् त्रिपदाया मन्ततो ऽवसानं दृष्टीयन्निमन्त्र-
धितय इति तथा चतुष्पदायां त्रिष्टुभो वयो वयः शय
मिति तथा पञ्चपदाया यन्मे यम मित्यत्रापि द्वौ द्वा-
वथैक मभि न इडा यूथस्य मातेत्यथापि द्वावुक्त्वा ऽथैक
मथ द्वौ तव त्यं नर्यं नृतम मिति षट्पदायां द्वयोर्द्वयो-
रवसान मुभे यदिन्द्र रोदसी इत्यथापि त्रिष्वपि
वृश्चपुराणवदिति सप्तपदायां त्रीनुक्त्वा द्वौ द्वावग्निं
होतारं मन्ये दास्वन्त मित्यथापि द्वौ द्वावथ त्रीन्

प्रोष्ठक्षै पुरो रथ मित्यष्टपदाप्रभृतीनां न प्रज्ञात मवसानं विद्यते तत्र मध्य एव पदस्य नावक्षेदर्था-भिप्रायणान् न्यूनीभावो अर्थाभिप्रायणा दतिरेको ऽथ यचैतदक्षर मागच्छति ता मिति वा तदुतोनीक-रीतेराकाचरीभाविनो वा सम्बयस्तदथैतौ श्लोकौ भव-तश्चत्वारि सम्बिजातानि येश्छन्दो ह्रसते न च प्रश्लिष्ट मभिनिहितं चिप्र मथ प्रद्रुत मेतानि सम्बि-जातानि मिमानश्छन्दो अक्षरैदैंधं कुर्यात् सम्पूर्णेन पूर्णं किञ्चन नेङ्गयेदिति छन्दसां विचयं जानन् यः शरीराद्विमुच्यते छन्दसा मेति सालोक्य मानन्त्याय श्रुतेः श्रिय मिति ॥७॥

अथातः स्तोमान् व्याख्यास्यामस्तेष्वर्था भवन्ति युग्मतश्चायुजश्च तेषां विवेक एकप्रभृतयो द्व्युत्तरा अयुजो द्विकप्रभृतयो द्व्युत्तरा युग्मत उभये सन्तो द्वया भवन्ति समाश्च विषमाश्च यस्त्रैधं व्युह्यमानः समाः पर्याया भवन्ति स समो ऽतोऽन्ये विषमा विषमो द्वया भवन्त्येकाधिशयो द्व्यधिशयश्च य एकया समता मति क्रामति स एकाधिशयोयो द्वाभ्याए स द्व्यधिशय-स्त्रिकप्रभृतयः षडुत्तरास्तेषां समाः पर्यायक्तृप्तयस्त्रयः पर्यायाः पर्यायास्त्रिविष्टुत्याः प्रथमे पर्याये प्रथमा तृच-

भागा ता मेव पर्यायभागेत्याचक्षते मध्यमावाप उत्तमा परिचरा मध्यमा त्वचभागोत्तमावाप उत्तमे पर्याये प्रथमावापो मध्यमा परिचरोत्तमा त्वचभागा सैषा विष्टावकृतिरेकविंशतिप्रभृतिषु साधिष्ठ मुपपद्यते एकिप्रभृतयः षडुत्तरा एकाधिशया स्तेषां पर्यायकृतिः समपर्यायैर्विषमा वर्त्तते पर्याया हि ते भवन्ति यावभितः समा वयुजौ तयोः पर्यायान्त्यंछ्वरेत्पूर्वस्यैक मुत्तरस्य द्वाविति युग्मतात्र द्व्यधिशयानां युग्मायुक्पर्यायाणां सता मेष एव न्यायो ऽथ युक्पर्यायाणां पूर्वस्य द्वावुत्तरस्यैक मिति यथा युग्मतां द्व्यधिशयानां युक्पर्यायाणा मेव मयुजा मेकाधिशयानां युग्मायुक्पर्यायाणां पञ्चप्रभृतयः षडुत्तरा द्व्यधिशयास्तेषां पर्यायकृतिः समपर्यायैर्विषमा वर्त्तते पर्याया हि ते भवन्ति यावभितः समावयुजौ तयोः पर्यायान्त्यंछ्वरेत्पूर्वस्य द्वावुत्तरस्यैक मिति युग्मतां चैकाधिशयानां युग्मायुक्पर्यायाणां सता मेष एव न्यायो ऽथ युक्पर्यायाणा पूर्वस्यैक मुत्तरस्य द्वाविति यथा युग्मता मेकाधिशयानां युक्पर्यायाणा मेव युजां द्व्यधिशयानां युग्मायुक्पर्यायाणा मित्ययुजः ॥ ८ ॥

अथ युग्मान्तो त्रिकप्रभृतयः षडुत्तरा द्व्यधिशयाश्चतुष्कप्रभृतयः षडुत्तरा एकाधिशयाः षट्कप्रभृतयः षडुत्तराः समास्तेषां पर्यायकृतिर्व्याख्याताथ यानां विवेक एकिप्रभृतयश्चतुरुत्तराः कलिस्तोमास्त्रिकप्रभृतयश्चतुरुत्तरास्त्रेतास्तोमा द्विकप्रभृतयश्चतुरुत्तरा द्वापरस्तोमा श्चतुष्कप्रभृतयश्चतुरुत्तरा कृतस्तोमा अथ येषु समविषमाणां विवेक एकिप्रभृतयो द्वादशोत्तरा एकाधिशयाः कलिस्तोमाः पञ्चिप्रभृतयो द्वादशोत्तरा द्व्यधिशयाः कलिस्तोमास्त्रिवृत्प्रभृतयो द्वादशोत्तराः समाः कलिस्तोमास्त्रिकप्रभृतयो द्वादशोत्तराः समास्त्रितास्तोमाः सप्तिप्रभृतयो द्वादशोत्तरा एकाधिशयास्त्रेतास्तोमा एकादशप्रभृतयो द्वादशोत्तरा द्व्यधिशयास्त्रेतास्तोमा द्विकप्रभृतयो द्वादशोत्तरा द्व्यधिशया द्वापरस्तोमाः षष्ठप्रभृतयो द्वादशोत्तराः समा द्वापरस्तोमा दशिप्रभृतयो द्वादशोत्तरा एकाधिशया द्वापरस्तोमाश्चतुष्कप्रभृतयो द्वादशोत्तरा एकाधिशयाः कृतस्तोमा षष्टिप्रभृतयो द्वादशोत्तरा द्व्यधिशयाः कृतस्तोमा द्वादशप्रभृतयो द्वादशोत्तराः समाः कृतस्तोमा अथोऽन्त एषां तज्जातीयविवेक एकिप्रभृतयस्त्र्युत्तरा उभये

मेकाधिशया त्रिकप्रभृतयोस्तूत्तरा उभयेषां इ्यधिशयास्त्रिकप्रभृतयस्तूत्तरा उभयेषाᳫ समा व्यत्यासं वर्तेते ॥ ६ ॥

अथ कतमे सप्तच्छन्दसाᳫ स्तोमा इति त्रिवृत्पञ्चदशः सप्तदश एकविᳫशः पञ्चविᳫशस्त्रिणवस्त्रयस्त्रिᳫश इत्यथ खल्वाह सानुष्टुप् चतुरुत्तराणि छन्दाᳫस्यसृजन्त षडुत्तरान्स्तोमान्त्सप्तदश इति सप्तदशात् त्रिक मुद्धृत्य पुरस्तात् त्रिवृतो निदध्या च्चतुर्दशानि त्रिणवान्ते ताः पञ्चविᳫश उपदध्यादेव मेतान् षडुत्तरान् ब्रुवते ऽथ कतमे भागस्तोमा इति त्रिवृत्पञ्चदशः सप्तदश एकविᳫशेति त्रिवृतः पथ्यायां विवदन्त उद्यती पथ्या मन्य इति गौतमः सा हि पथ्या स्थाने तिष्ठतीति परिवर्त्तिनी मिति धानञ्जय्यः सा हि विष्टुती न्यायतरेण कृता भवतीत्यथाप्यवर्पुकोस्तु पर्जन्यो भवतीत्युदित्यां निन्दा मवादीदित्यथ यत्र सᳫहृयमाणाः पर्याया यथास्थानं भवन्ति ता मविदुष्टपर्यायेत्याचक्षते यत्रायथास्थानं तां विदुष्टपर्यायेत्यथ यत्र समा स्वाद्यता पर्यायाणां भवन्ति ताᳫ समास मित्याचक्षते ऽथ यत्र मत्यवरोहिणस्तमभ्यान्याय इत्याचक्षते प्रत्यवरूढपर्यायेति

चाथ यत्र सᳫंस्तुतस्य स्तोमस्य प्रथमा भूयिष्ठभाग् भवति तां ब्रह्मायतनीयेत्याचक्षतेऽथ यच मध्यमा तां क्षत्रायतनीयेति च गर्भिणीति चाथ यचोत्तमा तां विडायतनीयेति स खलु पर्यायान्संᳫंहरन् भक्षान्यायं विडायतनीयाभिः प्रथमां पर्याय विदोप मिति वर्जयन्त्समान्त्समा मेव चिकीर्षेदिति ॥ १० ॥

अथातो विधिशेषान् व्याख्यास्यामो नोपवसथ्ये ऽहनि न समामनेरन्वागाथायिनी प्रयुञ्ज्यतेत्यथैताः कुशा उपकल्पयत औदुम्बरीर्वा पालाशीर्वा यो वान्यो यज्ञियो वृक्षः प्रादेशमात्रीः कुशपृष्ठास्त्वक्तः समा मध्यतो ऽङ्गुष्ठपर्वपृथुमात्रीः प्रक्षालिताः कारयित्वा गन्धैः प्रलिप्य सर्पिषा सक्षेपु खादिरी दीर्घसक्षेपु वैण्टुतेन वसनेन परिवेष्ट्यौदुम्बरी मध्यधिवासयेत् क्षौमᳫं शाणं कार्पास मिति वसनविकल्पा औदुम्बरी मुद्धृत्य न विसृजेदाच्छादिपोऽध्यूहनाच्छ्रीभूत एना मूर्द्धाग्रैः कुशैर्वेष्टयित्वैवंजातीयेनैवोद्दृशेन वसनेन प्रदक्षिणं परिवेष्ट्य स्पृष्टो ऽनपसृत उद्गायेदिति. गौतमो धिष्ण्यो ऽयं भवति न धिष्ण्य मासादयेदिति ध्रुष्ट मपश्ययेतेति धानञ्जय्यो पशुघणार्थेयं भवतीति सा य औदुम्बरी मङ्गलायैवोभुंक्ता

उदकसेवी बहुपलाशी नातीवाफली भवतीति प्राक्-
समासं वोदक्समासं वोपरिदिश मान्तीर्य प्रस्तोता
विष्टुतीर्विदध्यादुदगग्राभिः प्रथमं विष्टावे प्राक्सप्स्वं
प्रत्यक्सप्स्य मित्येके पश्चात्प्रथमस्य विष्टावस्य प्राग-
ग्राभिरुदक्सप्स्वं द्वितीयं प्रत्यगग्राभिरित्येके पश्चा-
देवास्य मध्यमस्य विष्टावस्योदगग्राभिः प्रत्यक्सप्स्वं
तृतीय मेतयावृता पर्यायान्विदध्यादृचिणार्थं प्रथम
मनुपूर्व मुदीचः सप्हृतान् विष्टावपर्यायान् विद-
ध्यादितरेष्वितरेण शिरसि कुशानु विधीयेरन्नित्येके
पराक्त्वादावर्त्यङ्गभावा तु विधीयेरन्नेतेन सम्बिरुक्त-
स्त्रिवृत उद्यत्या विधाने विप्रतिपद्यते यथैकः पर्याय
इत्येके तृचभागा स्थानेषु पर्यायाणां पर्यायाः स्युरि-
त्येक एतेनैवंजातीया व्याख्याता व्याख्याताः ॥११॥

अथातः सामान्तानां चत्वारो भागाः समास्ताः
स्वरो निधन मिडा वाक्यानि स्वराण्याग्नेयानि
तानि गायत्रतया वायव्यानि वा यानि निधन-
वन्त्यैन्द्राणि तानि त्रैष्टुभतया यान्यैडानि वैश्वदे-
वानि तानि जागततया यानि वाङ्निधनानि प्राजा-
पत्यानि तान्यानुष्टुभतया ऽत खल्वस्य सर्वश्छन्द-
सो निधनार्थस्य पूर्वं भवत्यग्नौ स्वरौ सन्तौ निध-

नेषु समाम्नायेते इकारोकारौ कस्य हेतोरिति यान्यन्यानि स्वराख्यसिद्धोपायानि तानि भवन्त्यत्र एव तेषां मध्यं न्ववस्वरणं भवत्यथैमौ सिद्धोपायौ भवतो वागुपायावित्यथापि निधनस्थानेषु युज्येते स्वरेथ सनिए ततो निधनवाद्स्यैनयोर्भवति तं वैराजस्य निधने नाइएहइन्नित्यथाप्येनौ वाक्यविलोपौ वाहुरिहेति वेद मिति वा सदो विलुप्त ईकार ऊर्दं मिति वा विपरीतिना सदो विलुप्त ऊकारस्ताव- प्यनुनासिक्यौ ब्रुवते वाक्यविलोपरवादेव तद्यत्र यत्रैते सामान्ता भवन्ति स्वरो निधन मिडेति तदे- तान् प्रक्लृप्ता इत्याचक्षते ऽथ यत्र समानसामान्ते सन्निपततस्तज्जामीत्याचक्षते समानपृष्ठे वै ग्रहनी समानभक्तिनी च खलु नानात्वप्रक्रान्तेप्वेवाजामि भवत्यथ यत्र समान मभ्यस्यते साम वाऽर्वा जाम्येव तद्भवति सामान्यान्नसामान्नैर्नानद्दः संयुजामि भवति ॥ १२ ॥

अथैतान्यन्तरेण व्यवयन्त्यजामिकरणानि भवन्ति सोमो वषट्कारः शस्त्र मवयवो ऽथ यत्रान्तरेण सामानि गीयथातिस्कन्दसं परिमाद इति तत्तत्राथ यत्रैक मावर्त्तिस्थानं नाना सामानि समवयन्ति यथा

व्रत एकसाम स्थान मिति तत्राचाथ यत्र समासान्ता व्यत्यस्यन्ते यथा विश्वजिति तत्तत्राथ यत्र समान-सामान्ते सन्निपततो मध्ये निधनेन तत्र यत्रो मध्ये निधनेनान्नैः पृथगिति तत्तत्र यत्रो न विद्यतेऽर्थः सन्निपतति त मर्थो ऽजामिकरण इति तत्तत्र सर्वत्र रथन्तरसन्निपाते जामि भवति तथा बृहत्सन्निपाते तचैतान्यजामिकरणानि सौभरं प्लवत्यो बृहद्-व्येष्ठोऽभिव्याहारो वार्कजम्भं बृहन्निधनानीत्युक्तं रथन्तरसन्निपातेषु कण्वरथन्तर मभि भवति रथ-न्तरणिधनानोति बृहत्सन्निपातेष्वेतावता खलु जाभि कत्वं समन्वीचेत तदस्तिखित्वामन्छन्दो देवता नास्तीति नास्तीति धानञ्जय्यः किं स्वरस्य छन्दो भविष्यति का देवता मितावरो भवतीत्याश्व-तरगीतमी यच्छन्दसाया मृचि गीयते तदस्य छन्दो यद्देवत्यायां साथ देवता तद्विजानीमो यत्स्वयोन्यः स्वयोनिनापचिततरं भवत्यथाप्यैन्द्र्य मृच ऐन्द्रं सामेति इजेति ॥ १३ ॥

॥ इति निदानसूत्रे प्रथमः प्रपाठकः ॥

---

॥ अथ द्वितीयः प्रपाठकः ॥

ऋत्पिन्नत्स्वूहाइ अन्तपिन्नत इति वै खल्वाहु-
रयद्याविरता एवोहनान्नो एव मार्येयो भवत्यथा-
प्यूह इत्येव माचक्षते कर्त्तव्य इतीवैतद्भवत्यथापि
याज्ञिका विप्रतिपद्यन्ते यन्नार्थः खलु पुनरूहो भव-
त्यथापि वृत्तिर्योनिरिति गायन्ति किमु खलु स्मृतौ
वृत्यां किं योन्यां भविष्यतीत्यथापि नात्यन्तं गायन्ति
तत्र यद्गीतं कर्त्तव्य मित्येवापन्ना भवत्यथापन्नसं
हतस्य संहिता मवेक्षसो गायन्ति तदेतत्स्मृतौ
नोपपद्येत इत्युषिन्नत इत्यपरं कथ मेव वन्ननार्थं यत्नो
क्रियेता ऽथापि बृहद्रथन्तरयोर्नाभिपश्यामीति भरद्वाज
स्तपो ऽतप्यत रथन्तर मुत्तरयोरिति वसिष्ठो विद्य-
मानखैवोहस्याभिवादो भवत्यनेनैव वासिष्ठभरद्वाज
मित्याचक्षते ऽथाप्याचार्यस्मृतीनां वक्ता त मतिशङ्क-
मानः सर्वत्रैवातिशङ्केवा ऽथापि योनिप्रतिषेधात्स्मृतं
मन्येतापि नूनं समर्थं मेवा,प यन्न मस्मतं मन्येत
यत्ने ह्यपि विमतिपिन्ना भवन्तीति यद्देतदद्यापि रता
एवोहनादित्यगीतोहास्ते भवन्त्यप्रमाणं सु खल्वन-
धीयानो यद्देतदूह इत्येन माचक्षत इति भवन्त्ययथार्थं

नामधेयानि यद्वेतद्याज्ञिका विप्रतिपद्यन्त इत्याचार्य-कल्पे याज्ञिका विप्रतिपद्यन्ते स एव विस्मृतः स्याद् ब्राह्मणविप्रतिपत्त्या च यन्न मन्त्र स्मृतं मन्येत यद्वेतद्वृत्ति-र्योनिरिति गायन्तीति छन्दस्यार्थोर्ध्वका वृत्तिर्योनी कल्पन्ते भवन्ति वापेत्य वृत्तियोनिभ्या माचार्य-गीतानि यथा पार्थ-लौश-शार्गाणि यद्वेतन्नात्यन्तं गायन्तीति कल्पा अपात्यन्ता भवन्ति यथावाप-मानेकाहः श्रीस्तोमा उत्तरा तरतिरनुब्राह्मणिना मिति यद्वेतदन्यसंहितञ्च संहिता मवेत्य गाय-न्तीति छन्दस्यपि वृत्तिस्तोऽन्यसंहितञ्च संहिता मवेत्य गायेन्न तावता छन्दो ऽस्मृतं मन्येतायापि य उपवादादस्मृतं मन्येतापि नूनं समर्चा अवापिचं चयोविद्या मस्मृतां मन्येत तां ह्यपेक्ष उपवद-न्तीति ॥ १ ॥

एकर्चदृष्टीनि भवत् सामानीऽ दृचदृष्टीनीत्ये-कर्चदृष्टीनीति शाण्डिल्यायनस्तद्विजानीमश्छान्दसे-नाध्यायेनैकर्चान् भूयिष्ठांश्छन्दायामधीमहे ऽयापि नो यज्ञ उपदृष्टिः प्राह यदत्र धृष्णोस्येकर्चान्कर्तुं मया-प्येकर्चैः स्तोमान्त्सम्मिमत एकर्चान् ह वय मधीमहे नाध्वर्युवप्रचा उत्तरे अभिजानतीति दृच मदृष्टीनीति

धानन्तथ्य स्तद्दिजानीमश्छान्दसैनैवाध्यायेनैकार्थानधी-
त्य तृच मुत्तम मधीमहे निदर्शनार्थो वै स भवत्येव
मेवातः प्रागित्यथापि नायत्र एवोपदृष्टिः प्राप्तो काम
एवार्थेकर्चान् करोत्यथापि न ऋचः पूर्वा स्तोत्रियाणि
प्राहुर्द्वितीयायां चाथ तृतीयायां चर्चि लक्षणं
भवति यद्वार्येयं तत्साम भवतीति यथाकूपार मैपिर-
म्पौरुहन्मन मित्यथापि छिन्न मिव वा एतद्वादे-
कर्चा इति ब्राह्मणवादः परिचष्टे ऽथापि जनुषे-
कर्चौ नाप्राधीमहे . तृचदृष्टित्वादेवाप्यधुनैव दैव-
वादे यस्तृचापन्नं छन्दोऽनुगगातु रवचदृष्टीनीति शा-
ण्डिल्योऽप्यन्टपिर्यथादेवतान्यपेरकार्ह्रे यथासामोपे-
तान्यपेरकर्चां यथाभूयिष्ठान्यपि द्वयोर्यथातीपङ्क्ता
स्वपि तिसृषु यथा सन्तनीत्यपि चतसृषु यथेलान्द
मपि भूयसीषु यथा पुरुपव्रतं काश्यपव्रत मादित्यव्रत
मित्यपि त्वेतान्येके सामसूक्तानीत्याचक्षत इत्या-
चक्षत इति ॥ २ ॥

अथ द्वयानि सामानीति प्रदिशन्ति यान्यपुर-
स्तात्स्तोभानि पदनिधनानि लघुगीतीनि तानि
गायन्तराणि यानि पुरस्तात्स्तोभानि बहिर्णिधनानि
गुरुगीतीनि (उपान्तपञ्चम्यां पङ्क्तिपञ्चकं गजन्तं तानि

रायन्तराणि यानि गुरुगीतीनि वार्हतानीति * )
(तानि वार्हतानि यथान्यतरतो रायन्तराणि चान्य-
तरतो वार्हतानि चापुरस्तात्स्तोभानि च वहिर्णि-
धनानि च पुरस्तात्स्तोभानि च पदनिधनान्यथोभ-
यतो वार्हतानि च पुरस्तात्स्तोभानि च पदनिध
नानि गुरुगीतीनि पुरस्तात्स्तोभानि वहिर्णिध-
नानि लघुगीतीन्येतानि विजिज्ञासेतेति शाण्डि-
ल्यायनो यानि लघुगीतीनि रायन्तराणि यानि गुरु-
गीतीनि वार्हतान्यपि यान्युदात्तगीतीनि तानि राथ
न्तराणि यान्यनुदात्तगीतीनि तानि वार्हतानीति+)
कल्पेनैव यज्ञकामा व्याख्याता यथैतत् स्वर्गकामो
यज्ञः पशुकामो यज्ञः प्रजापतिकामो यज्ञोऽभिचर
णीय इत्यप्याहुरुद्वार्थ एव खल्वयं भवति खल्वर्थं
येष्णोऽन्येर्या अन्ववयन्तीत्याप्तकामाखिद्देवा शूयन्ता३
अनाप्तकामा इत्यनाप्तकामा इति वै खल्वाहुः को
ह्याप्तकामस्य सुत्या कः प्रत्यर्थी भविष्यतीत्ययाप्याहुः
शश्वदङ्गाप्तकामा एव भवन्ति तत्सन्यवादेन जानीमो
यस्मै देवाः कामयन्ते तस्मै समर्द्धयन्ति कुतो ऽनाप्त-
कामाः समर्द्धयिष्यन्तीत्ययापीहैव पश्याम आप्तका-

---

* एतावानंश क पुस्तके नास्ति । + एतावानंश ख पुस्तके नास्ति ।

मतराणा मनाप्तकामैरोसां यथैतद्राज्ञा मित्य-
थापाल्यक मवदायाद्द विश्वेभ्यो देवेभ्यः स्वाहेति
कृतो ऽनाप्तकामान् प्रति भविष्यदित्यथापप्राहुर्हि-
स्थाना देवा भवन्ति न्यून मन्यत् स्थानं सम्पूर्ण
मन्यद्यद्ध ह न्यूनं तदितः प्रत्तैः प्रति विभवन्ति यद्
सम्पूर्णं ततथाशिषः समर्द्धयन्तोति ॥ ३ ॥

कथ मु खल्वङ्गकामा इति विद्यन्त इत्येके श्रुति-
प्रमाणा घङ्गे श्रूयमाणां कथं क्रतौ प्रतीयामेत्यथापि
योऽङ्गकामं क्रतुं कामयेतापि नूनं सोऽङ्गे दुष्टे सर्वं
मेवापि क्रतुं दुष्टं मन्येताथापि पृष्ठहोमं सर्वेषां
स्तोत्राणां मन्येतेति क्रतुकाम इत्यपरं क्रतुः खल्व-
धिक्ततोऽङ्गैश्च कामैश्च भवत्यथापि न आर्षेयकल्पो
दर्शयति यज्जातोया प्रतिपद्भवति तज्जातीयानि
द्रव्याणि कल्पयति यथा ज्योगामयाविनो वर्षकामस्य
जन्यया माविधित्समानस्येत्यथापि योऽङ्गकामं मन्ये-
तापि नूनं स तदेवाङ्गं कृत्वा विरमेत्तस्मिन् हि स
कामो भवतीति यदेतदङ्गदोषात् क्रतुदोष इति
विषये खलु दोषो भवति न तथाकामो यदेतत्पृष्ठ-
होमं सर्वेषां स्तोत्राणां मन्येतेति भवन्ति वा
अङ्गधर्मा यथा युग्यस्य घासदान मचक्षोपाञ्जन

मिति सम्भूय तु खल्वर्थान्त्साधयन्तीति कथ मु ब्रह्म-
साम्नि कामागान मिति यथाकामी कामाना
मित्येक श्राहुरनादेशे कि मन्त्यद्याथाकाम्यात्प्रतो-
यामाथापि रहस्यब्राह्मणे दर्शयति यथाकामी
कामाना मिति क्रतुकाम इत्यपर मेषोऽधिकृतोऽथापि
यः क्रतुकामेऽधिकृते सत्यन्यं काम मुत्पादयेदपि
नूनं स पशुना तृतीयसवने चरन्तीत्यन्यपशु मुत्पा-
दयेदो मिति सति समायादपेयादाद्रा वै त मेव
प्रतीयाद्यः प्रतिसवने सदृशं व्याहन्याद्यदेतदनादेश
इत्यादेशजातिरेषा भवति तदादधिकारो यदेतद्ब्र-
ह्मब्राह्मणे दर्शयतीति सर्वाभिप्राय एतदुपपद्यते
कथ मु खल्वाशीः समृद्धिरुपसरणानीति सर्वस्तोचे-
ष्वित्येक आहु स्तोत्रशब्देन च न हि स्तावयत्यपि चाह
निर्देशे किमर्थो ऽवयवं प्रतीयादिति ब्रह्मसाम्नीत्यपरं
ब्रह्मसाम ह्याशोर्द्धान मित्यथापि य स्तोत्रशब्दानां-
स्तोचे प्रतीयादाशीःशब्दादपि स नाब्रह्मसाम्नि
प्रत्येतु मर्हतीति ॥ ४ ॥

अथातो यज्ञस्थानान्यपि च सन्धियज्ञा इत्या-
चक्षते ऽहोरात्राभीज्याग्निहोत्रं सायमाहुत्या
रात्रि मभियजते सा यत्र क्व च पुरोदयाद्धूयेत ह्वे

स्थाने जुहोमीति विद्यात्मातराहुत्याः सा यत्र क्व च पुरास्तमयाद्धूयेत स्वे स्थाने जुहोतीति, विद्यात् ते तु यदादी निदधाति प्राप्तस्य होमकालोऽपि चैनं कृत्स्ने अहोरात्रे अभीष्टे भवत इति पूर्वपक्षापरपक्षाभीज्या॰ दर्शपौर्णमासौ पौर्णमासेन हविषा ऽपरपक्ष मभियजते स यत्र क्व च पुरा ऽऽमावास्या यजेत स्वे स्थाने यजत इति विद्यादामावास्येन पूर्वपक्षं स यत्र क्व च पुरा पौर्णमास्या यजेत स्वे स्थाने यजत इति विद्यात्तौ तु यदादी निदधाति प्राप्तस्य यज्ञकालोऽपि † वैधं कृत्स्नौ पक्षावभीष्टौ भवत इत्युक्ताभीष्टा चातुर्मास्यान्योषधिभक्ताभीज्याग्रयणेष्टी उदगयन-दक्षिणायनयोः पशुसमस्तस्य संवत्सरस्याभीज्या सुत्येति तदखल्वेतत्सकल्पयुक्त माहिताग्नेः कुशलेन यदग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यान्याग्रयणेष्टी (पशु सोम इति वै‡) सत्रं य देवं न करोति ग्लायदिज्याः स्यादित्यननुभूतिजः स्यादिति सिद्धिदर्शी वा स्यान्मूलिपुरोडाशेनाप्नोत्याज्येन च पयसा च प्राणीत्ययाप्याहुरादित्यस्य वाव खलु चन्द्रमाग्नि-

---

॰ क-पुस्तकेऽत्र पूर्वंचापरत्र च सर्वत्रैव "॰भीष्टा"-इति पाठ ।

† "होमकालोऽपि"-इति क ।

‡ नास्त्येवोऽयं क-पुस्तके ।

क्षेमानि पर्वाणि कुरुतो ययोरिय मभीज्या भवती-
त्यग्निहोत्रेणादित्यस्येज्या समियजते दर्शपूर्णमासा-
भ्यां चन्द्रमसस्तदग्निहोत्रं सायमाहुत्या प्रयुज्यते
प्रातराहुत्याभितिष्ठते सोऽपि नाहुत्वा प्रातराहुति
मन्यं यज्ञ मुपक्रमते कथं पूर्वस्मिन्ननिष्ठितेऽन्य मुप-
क्रामेतेति पौर्णमासेन हविषा दर्शपौर्णमासौ प्रयु-
ज्येते ऽमावास्येन निस्तिष्ठेते सोऽपि नानिष्ट्वामा-
वास्येन हविषान्यं यज्ञ मुपक्रमते कथं पूर्वस्मिन्ननि-
ष्ठितेऽन्य मुपक्रामेतेति ॥ ५ ॥

तदपापरपक्षे प्रायणं परिजिहीर्षितं भवति रात्रौ
वा यज्ञविलोपो विसंस्थितेऽपि च नो ह तमस एव
तम इयादिति तच्चेदपरपक्षे प्रायणं गच्छेत यावत्यो
ऽपरपक्षस्यातिशिष्टा रात्रयः स्युस्तासां सायं प्रात-
राहुतीः प्रतिसङ्ख्याय हुत्वा-मत्याहुत्या ऽऽमावास्येन
हविषेष्ट्वा समापयेयुरेव मयज्ञविलोप इति पूर्वपक्षे
चेद्रात्रौ प्रातराहुति मेव पुरस्तादाहवनीयं हरेयुः
पश्चाद्गार्हपत्यं दक्षिणतो दक्षिणाग्निं मध्ये शरीरं तं
दक्षिणाशिरसं चितावाहितं यज्ञपात्रैः कल्पये-
दध्वर्युः शिरसि कपालानि युञ्ज्यात्स मन्तधानं च
चमसं ललाटे प्राशित्रहरणं नासिकयोः स्रुवौ कर्ण-

स्थाने जुहोमीति विद्यात्प्रातराहुत्याह: सा यत्र क्व च पुरास्तमयाद्धूयेत स्वे स्थाने जुहोतीति, विंद्यात् ते तु यदादौ निदधाति प्राप्तस्य होमकालोऽपि चैनं कृत्स्ने अहोरात्रे अभीष्टे भवत इति पूर्वपक्षापरपक्षाभीज्या॰ दर्शपौर्णमासौ पौर्णमासेन हविषा ऽपरपंच मभियजते स यत्र क्व च पुरा ऽऽमावास्या यजेत स्वे स्थाने यजत इति विद्यादामावास्येन पूर्वपक्षं स यत्र क्व च पुरा पौर्णमास्या यजेत स्वे स्थाने यजत इति विद्यात्तौ तु यदादौ निदधाति प्राप्तस्य यज्ञकालोऽपि † वैधं कृत्स्नौ पक्षावभीष्टौ भवत इत्युक्ताभीष्टा चातुर्मास्यान्योपधिभक्ताभीज्याग्रयणेष्टी उदगयन-दक्षिणायनयो: पशुसमस्तस्य संवत्सरस्याभीज्या सुत्येति तदस्खल्वेतत्सर्वमयुक्त माहिताग्ने: कुशलेन यदग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यान्याग्रयणेष्टी (पशु सोम इति वै ‡ ) सत्रं य देवं न करोति ग्लायदिज्याएं स्यादित्यननुभूतिजएं स्यादिति सिद्धिदर्शी वा स्यान्मूलिपुरोडाशेनाग्नेत्याज्येन च पयसा च प्राणीत्यथाप्याहुरादित्यस्य वाव खलु चन्द्रमाग्नि-

---

* क-पुस्तकेऽत्र पूर्वत्रापरत्र च सर्वत्रैव "॰भीष्टा"-इति पाठ ।

† "होमकालोऽपि"-इति क ।

‡ नास्त्येषोऽग्र क-पुस्तके ।

न्येमानि पर्वाणि कुरुतो ययोरिय मभीज्या भवती-
त्यग्निहोत्रेणादित्यस्येज्या मभियजते दर्शपूर्णमासा-
भ्यां चन्द्रमसस्तदग्निहोत्रम् सायमाहुत्या प्रयुज्यते
प्रातराहुत्याभितिष्ठते सोऽपि नाहुत्वा प्रातराहुति
मन्यं यज्ञ मुपक्रमते कथं पूर्वस्मिन्ननिष्ठितेऽन्य मुप-
क्रामेतेति पौर्णमासेन हविषा दर्शपौर्णमासौ प्रयु-
ज्येते आमावास्येन निस्तिष्ठेते सोऽपि नानिष्ट्वामा-
वास्येन हविषान्यं यज्ञ मुपक्रमते कथं पूर्वस्मिन्ननि-
ष्ठितेऽन्य मुपक्रामेतेति ॥ ५ ॥

तदपापरपक्षे प्रायणं परिजिहीर्षितं भवति रात्री
वा यज्ञविलोपी विसंस्थितेऽपि च नो ह तमस एव
तम इयादिति तच्चेदपरपक्षे प्रायणम् भवेत यावत्यो
ऽपरपक्षस्यातिशिष्टा रात्रयः स्युस्तासाम् सायं प्रात-
राहुतीः प्रतिसङ्ख्याय हुत्वा-मत्याहुत्या ऽऽमावास्येन
हविषेष्ट्वा समापयेयुरेव मयज्ञविलोप इति पूर्वपक्षे
चेद्रात्री प्रातराहुति मेव पुरस्तादाहवनीयम् हरेयुः
पश्चाद्गार्हपत्यं दक्षिणतो दक्षिणाग्निं मध्ये शरीरं तं
दक्षिणाशिरसं चितावाहितं यज्ञपात्रैः कल्पये-
दध्वर्युः शिरसि कपालानि युञ्ज्यात्स मन्तधानं च
चमसं ललाटे प्राशित्रहरणं नासिकयोः स्रुवौ कर्ण-

योर्वाञ्चे हिरण्य मवधायानुस्तरणिक्या गोर्वपया मुखं प्रच्छाद्य तत्राग्निहोत्रहवणीं तिरश्चीं दक्षिणे पाणौ जुहूॅ सव्य उपभृतं पार्श्वयोः स्फ्योपवेषौ तथा वृक्कौ यथास्व मुरसि ध्रुवा मुदरे पात्री मुपस्थे कृष्णा-जिन मन्तरेण सक्थिनी शम्या दृषदुपले यत्र नादे-च्यामो दक्षिणश्चोपश्च दक्षिणत उलूखल मनुसक्थि मुसलं पादयोः शकटशूर्पे सर्वाण्युत्तानान्यासि-चनवन्ति पृषदाज्येन पूरयित्वार्थेन यथास्थानं युग-पदग्निभिरुपसज्जेरसार्वस्थानिकं परिमाणॅ स एष यज्ञायुधी यजमानः स्वर्गं लोक मेतिति ब्राह्मणं भवत्याहुतिं जुहोति पुत्रो भ्राताथो वान्यो यज्ञियो ब्राह्मणस्त्वस्मात्त्व मधिजातोऽसि त्वदयं जायतां पुनरसौ स्वर्गाय लोकाय स्वाहेति शान्तिर्वास देव्यॅ शान्तिर्वामदेव्यम् ॥ ६ ॥

एकहिङ्कारं बहिष्पवमानॅ साम्नश्चैकत्वा-च्छन्दसश्चेत्याचार्याः साम्ना मनु नानात्व मुत्तरयोः पवमानयोः पृथग्घिङ्कारा भवन्ति पर्यायाणा मनु नानात्व मावर्त्तिषु सन्धौ * विप्रतिपद्यन्त एकहि-ङ्कार इत्येके यथा बहिष्पवमानं त्रिराचार्या हिं

* "साद्यतिसन्धौ"–इति क पाठ ।

कुर्वन्ति देवताना मनु नानात्वं विश्वजितो वा ऽपि वादेवतं पविष्यमान मथात्र सकृद्धिङ्करोति सकृद्धिं-करोत्यादित्याद् वपिष्यमानश्चेत्याचार्या ऽथ यज्ञा-यज्ञीयानुरूपे कथ्यं हिङ्कार इति यथोत्तरयोः पव-मानयोरित्येके ऽस्ति हि सामनानात्वं यथा वा विश्व-जिति नानादेवते सति सकृद्धिङ्करोति सकृद्धिङ्करो-त्यादित्याद्पविष्यमानस्य तथा वा ऽऽदित्यव योनौ यज्ञं तन्वानस्य कथन्तरे तथा रथन्तरवर्णं ख्याता मिथुने यथाख्यानम् ख्याता मिति पविष्यमाने ऽथोत्पन्ने भवतो न चापि निवर्त्तयेदयथापि यथा गायत्रं यज्ञायज्ञीयधर्मान्प्रतिपद्यत एव मपि यज्ञा-यज्ञीयं गायत्रधर्मान् प्रतिपद्येत गायत्रस्य पवि-ष्यमान एव धर्मा भवतीत्यपरं यान्यत्र गायत्रात्र ऽन्यत्र पविष्यमानादिति ॥ ७ ॥

गायत्रस्य कात्याः सामान्ता यावन्निगदम् छरि-शाकेन्द्रस्थेन प्रत्याम्नाया भवन्ति तत्र किमर्थाऽयद्य प्रतीयादित्यथाप्येव मन्वाहतं गायत्र भवत्यथापि याथाकाम्यथाविप्रयोगस्तत्कृतम मथाप्येव प्रयोगाणां धर्मो येन प्रक्रमस्तेन समाप्तिरिति पविष्यमान इत्यपर मेतद्वाक्यस्य विकारस्थान मथापित्राकुराए

•

सामान्ता नातियन्त्यथापेत्रव मजामि भवत्यथापेत्रवं यथाभूयिष्ठं भवतीति प्रथमाया मिति वार्षगण्य एतद्दद्विष्पवमानस्याशीर्दान मत्र हि काम्याः प्रति पदो भवन्तीति रथन्तरवर्णाया मित्यपर मेपा र विकृततमापि च पथ्यप्रक्रमं पथ्यावसानं भविष्य तीति ब्रह्मण आज्य इत्यपरं ब्रह्मसाम ह्याशीर्दा मित्युत्तरयोः पवमानयोरित्यपर मेतद्देतिपाठ् सामा न्तानां स्थान मथापेत्रवठ् रोहो भवत्यपि वान्ताख्यानि कर्माणीति यद्देतज्जामीत्यजामि वा कल्पयेतार्थो ऽजामिकरण इति वापि तितिचेतान्टच्येके गाय गायन्ति कस्य हेतोरिति स्वरायेतत्स्थानं कुर्वते स इत्यं केवलः स्वरो गातो भविष्यतीति तथा प्रचवि प्रस्तुत्यान्टचि गायन्तः प्रतिहारञ्च चानुत्वाद म पायाच्च निधनञ्च चानिधनं स्वरित्वा निधन मृत्वी देदित्याचार्याः ॥ ८ ॥

अथ वृहद्रथन्तरयोर्वदति तयोः समानं निध मासीत्तस्मिन्नातिष्ठेता मिति किन्निधन मित्यह रिति * कौत्सो ऽकार मेवान्ये सकारोपसृष्टं सका मेवाह मनयोः समानं निधनं मन्य इति धानञ्जय

---

* । "मिति इरिति"-इति ख ।

स ह्युभयत्र दृश्यत इति निधनब्राह्मण मेवाह मिदं मन्य इति वार्षगण्यो द्वे खल्विमे पृष्ठे भवत एकं पृष्ठस्थानं तस्मिन्नर्द्धया महं पूर्वताया इत्यथैतेषु पुरस्तात्प्रपेषु वा इत्येतदुदस्थेदित्येक आहुरेतानि मनसान्वोच्योद्गायेदिति हि भवतीत्यन्य दिदं तेभ्यो भवतीति यथाधीत मित्याचार्या न चोदासो विज्ञायते ऽपिवार्थः ख्याइयक मयापि सप्तशये लोपो लोपान्यायतर इति कथं पवमानगतयोरिति कर्त्तव्या इत्येके सामसंयुक्ता हि भवन्त्यकर्त्तव्या इत्यपरं स्थानसंयुक्ता हि भवन्त्यथापि पवमानसामनी प्रधानभूते भवत इत्यथापि यद्यु हैतान्पुरस्तात्स्तोत्रादकरिष्यद् द्वावेतावन्यैः सामभिरभविष्यन् यद् द्वानन्तरान्तस्तोत्रव्यवायोऽभविष्यदेतेन वामदेव्ययज्ञायज्ञीये व्याख्याते बृहतः स्तोत्रोत्तमायां ब्राह्मणोक्तानाऽ रोहाणा मुत्तमं न रोहेदित्याचार्या अप्रथमायेवं ह्याह बृहतो रोहा वृणी मह्य मदायिषु वान्तौ पूर्वौ वृद्धौ ।नधनोपाये च द्वितोय मक्षरं वर्द्धयेत्स तृतीयस्तदुपरिष्टात्स्तोत्रस्य प्रत्यवरोहेदेवऽ हि स्म युवान मृत्विज मनूचानं प्रेत माहुर्बृहद्देन मप्रत्यवरूढं परावधीदिति ॥ ६ ॥

अथ यज्ञायज्ञीयस्तोत्तरयोर्द्वाचरेण प्रस्तौति यथा

बृहद्रथन्तरयोस्तदपि शश्वद्ब्राह्मणं भवति तानि ह वा एतानि द्वादशाक्षरप्रस्तावानि ककुबुत्तराणि सामानि बृहद्रथन्तरे यज्ञायज्ञीयं चेत्यथ खल्वाह यदग्निष्टोमयाज्यन्तत माह तदन्वस्य यज्ञः स्वक्ष-रेणान्ततः *प्रतिष्ठाप्य मिति कि मन्तं कि मक्षर* मिति वेत्येतदक्षरं वकारादि रकारो गकारान्त इत्येक आहुस्तस्य गकारलोपं ब्राह्मणं चिपतीति तदर्पित मुपेयुरेवं कृत्स्नेनाक्षरेण यज्ञस्य छिद्र मपि दधातीत्यार्चिक मेवैतदक्षर मित्यपर मेतस्मिन्हा-ऽक्षरशब्दाम्नतियन्त्यष्टाक्षरेण प्रथमाया ऋचः प्रस्तौ-ति द्वाक्षरेणोत्तरयोश्चतुरक्षरेण बृहतः प्रतिहर-तीति न स्तोभिकैः सहोपपद्यते तस्माद्यदेवान्त्य मक्षरं तन्निधन मुपेयुर्यथाधीत मित्याचार्याः स्वर-तन्त्वाण्यक्षराणि भवन्ति स्वरान्तता मेवाक्षरस्यैतद् ब्राह्मण मेव मवच्य दित्यथापि बहुलैषा छन्दसी वृत्तिर्वाड्विधनानि चैनान्याचक्षते वाग्रुपायानीति च यदेतदार्चिक मक्षर मिति यथाधिकार मेत-द्भवति स्तोभिकस्येहाधिकारो विज्ञायते ऽथापि संशये प्रकृतिसविध मेव प्रत्येतव्य मिति प्रत्येतव्य मिति ॥ १० ॥

अथ द्रव्यसमुद्देशो राथन्तराणि रथन्तरपृष्ठेऽभिरूपाणि बार्हतानि बृहत्पृष्ठेपूभयविधावुभयसाम्नि प्रवदितानि रथन्तरपृष्ट ऊर्द्धडानि बृहत्पृष्ठे ऽथ यत्र रथन्तरपृष्ठे बार्हतानि क्रियेरन् बृहदीसया तानि विद्यादेव मेव बृहत्पृष्ठेन राथन्तराणि स्वयोनीनि सर्वत्राभिरूपतराण्यस्वयोनिभ्यः सामन्याक्षँ ऋचाम सामन्याभ्यश्छान्दसी प्रथमाः सामन्या इत्याचक्षते ऽथ या यज्ञप्रवादाः सत्रप्रवादाः क्रतुप्रवादाः स्तोमप्रवादाः सर्वत्र ता अभिरूपाः शुक्रवत्यो ऽप्रवादाः पूर्वयोः पवमानयोर्होत्रप्रवादं हविष्प्रवादं समिद्धवद्धोतुराज्यं हूतवन्ति पीतवन्ति हृप्तवन्त्युत्तराणि मरुत्वत्यो द्युप्रवादा ऋतवत्यो माध्यन्दिनीयाः परिवत्यः कौशवत्यो निपत्वत्योमाध्यन्दिनीया गायत्र्यां वातत्त्रिष्टुभि वा मरुत्वच्चिकीर्षितं भवत्यथ खल्वाहु र्नोणि सवनानां छिद्राणि तानि तेनापि धीयन्त इति कतमानि छिद्राणीति पवमाना यद्देवतास्तुतयास्तानि छिद्राणीत्यथाप्यन्तरेण पवमानाध्यावर्त्तीनि च हविर्भिः प्रचरन्ति तानि छिद्राणीति वामदेव्यं मैत्रावरुणसाम सर्वत्राभिरूपं तदपचारे तल्लिङ्गीयाश्चिकीर्षेदथैतानि तार्तीयसवनिकानि रूपाणि स्वादुमत्यो

मधुमत्यौ मध्वत्यौ विश्ववत्यश्विवत्यः सूर्यवत्यौ दक्षिणवद् योनिदूतवच्च वृद्धवच्चोकथिव्यथ नार्मेध-स्तोत्रीये वदति ककुप् प्रथमा योष्णिगथ पुर उष्णि-गनुष्टुबिति ककुवेव प्रथमोष्णिग्द्वितीया पुरउष्णिक् तृती .। द्वाशतयेनाध्यायेन तां बह्वृचा अधीयते युञ्जन्ति हरी इषिरस्य गाथयोरौ रथ उरुयुगे इन्द्रवाहा वचो युजेति तत्र वयं चत्वार्यक्षराख्युपाहराम: खर्विदेति सानुष्टुब् भवत्युपरिष्टाज्ज्योतिः ॥ ११ ॥

काय नु षोडशी ज्योतिष्टोम इत्यकर्त्तव्य इति शौचिवृक्षिरन्तरिते ब्राह्मणसमाम्नायेनेति कर्त्तव्य इति गौतमः षोडशिनः स्तोत्रे देयेति हि भवतीत्य-थापि न आर्षेयकल्पो दर्शयति द्वादशाहस्य षोडशि-मन्तावतिरात्राविल्यथापि मन्त्रवर्णो भवति त्रीणि ज्योतींष्यपि सचते स षोडशीति निरूपेतो द्वाद-शाहो भवतीति वैलक्षवति संस्था मध्यस्थेतां विद्यमानां मन्य इति गौतम एवं च रहस्यब्राह्मणो दर्शयत्यथ तेन षोडशिसंस्थेन यजेतेति नाहास्यैषा संस्था विद्यत इति शाण्डिल्योऽतिरात्रे तु कृताकृतो-भवत्येव मित्राध्वर्युब्राह्मणं भवति नोक्थ्यो याह्यो *

* "नोपयाह्यो" —इति क ।

ऽतिराचो ग्राह्य इति सम्भी इमौ भवत इति धान-
ञ्जय्य उदयसन्धिरसावस्तमयसन्धिरपोतस्माद्यः कथा
तिरात्रः षोडशिमानेव स कुशलेनेति तस्यैता ऋचः
पञ्चविंशत्यचराः पञ्चपदाः पञ्चाचरपादा नवो-
पसर्गाचराश्चादितस्त्रयाणां पादानां त्रीणि त्रीण्यु-
पसर्गाचराणि पादान्तेषु भवन्ति ते ऽष्टाचराः
सम्पद्यन्ते पञ्चाचरावुत्तरौ दशाचरावेकसाश्चतु-
स्त्रिंश दचराः सम्पद्यन्ते न स्वा उपसृष्टाः कनो विद्या
मे तीर्थं ऽत्त्रैव वय मधीमहे तथा वह्वृचा इति
ब्राह्मणेनेत्याहुश्चतुस्त्रिंशदचराः संस्तुतो भवती-
त्यनुपसृष्टः कनीयानितीवैतद्भवत्यथाप्युध्रीयमाणेषूप-
सर्गाचरेषु नैवार्थो हीयते न वृत्तिर्व्युत्यथापि ग्राम्-
देना अनुपसृष्टा आथर्वणिका अधीयतेऽयापि निर्द्दा-
रितानामुपसर्गाचराणां वदत्यः वा एता एकपदा
स्त्र्यचरा विषमोऽच्छन्दो भुरिजः अक्षर्य इति चाचरा
ह्यपि भुरिजो भवन्तीति तचैतद्गौरिवीतं गायत्री
सामाभ्यासानुष्टुभं राचा समानभागः समान-
भवो भवतीति स यद्गौरिवीत्य इमा ऋचो ऽस्त्रयोनिं
कुर्वत ऋषिः स्वयोनिर्भविष्यन्तीत्येतेन सौभरना-
र्मेधे व्याख्याते रेवतीषु च वारवन्तीयम् ॥ १२ ॥

ज्योतिष्टोमोत्पाद मेव षोडशिनं ब्रुवते तत्र चास्य ब्राह्म॥ मधीयते ऽथापि कथ मेवं कृत्स्नं कर्मा-कृत मन्तारयिष्यदिति चतुर्थोत्पादं वयं तत्र चास्य ब्राह्मण मधीमहे ऽथाप्याहैकविंशायतनो वा एष यत्षोडशीति तदेकविंश महर्भवत्यथा प्याह दाश-तय्य ऋचो चातुरुत्तरं छन्दःक्रमे वा एवंविध मुत्प-द्यते न प्रथमकृताविरयज्ञो भवतीश रात्रेरियज्ञो भवतीत्याहुरहवर्जं चास्य हविर्भवत्यथापि नियुक्त-धर्मा भवति निवद्वाञ्छिल्पवान्यहवान्यथाहरेवं रात्रेरित्यपरं रात्र्या समानभागः समानमचो भव-तीति तौ खल्विमौ द्वौ सन्धौ भवतस्तयोरसौ नित्यः कृताकृतोऽयं कस्य हेतोरिति सार्धं तेन रात्रिः पञ्चदशविधतां लभते कृतं पञ्चदशविध महरित्य-थापि न त मुद्धृत्य पराक् स्तोत्रं रात्रावलम्प्रात कृतान्यैन्द्राण्यथापि विद्यते तस्य कालस्य स्तुति-र्नास्य विद्यते कस्मात्तु तस्य न विद्यते पराङेतस्यां वेलाया मादित्यो भवति नोपरा च स्तुतिर्विद्यत उदाहरन्ति त्वेव परां च स्तुतिं हिरण्यरूपे भवत्य-स्यादेवः प्रति दोषं गृणान इत्यथ खल्वाह प्रक्रीषु षोडशिना स्तुवीतेति तत्रैके महानाम्नीः प्रति

यन्त्वेताः शक्कर्यो भवन्तीत्येतास्वेव शक्करीप्रवादो भवतीत्यपर मेतार्थाधिकृता भवन्तीत्योङ्कारो विशेषः श्रुतः सर्वसामसु आदित्वेके स वाचा रथन्तरेण निवर्त्तेत यथा त्रयस्त्रिंशं तृतीयसवन मित्यभिपरीत्य प्रत्यपकर्षस्तादृश मेतद्भवति समुच्चयो वा नानार्थत्वात्प्रस्तावशान्त्यर्था हि वागुक्तीयादिशान्त्यर्थ ॐकारो वाक्तु पूर्वा स्यादेवं यथान्तरप्रत्यासत्तिरुत्तरा वाजघन्यविधेराचाराच्च ॥ १३ ॥

॥ इति निदानसूत्रे द्वितीयः प्रपाठकः ॥

---

## ॥ अथ तृतीयः प्रपाठकः ॥

अथ का प्रथमा संस्थेत्याग्निष्टोमीं प्रथमां मन्य इति शाण्डिल्यः प्रथमां ह्येव स्थानं भवत्यथापि प्रथम मधीमहेऽथाप्यणुप्रमुखानि भूतानि भवन्ति परोवरीयांस्यथाप्याह यज्ञमुख मग्निष्टोम इत्यथाप्येतया संस्थया चरत्यथाप्येषा समारब्धतमा भवतीत्यथापि नाग्निष्टोम मकृत्वापरे संस्थे करोति न ह्यनु-

पादाय प्रथमा मुत्तरयो; सिद्धिरस्त्यनुपादाय उत्तरे प्रथमा सिध्यतीत्यथाप्याह प्रजापतिर्वा एषा सɱ-स्थानां यदग्निष्टोमस्तां यदकृत्वाथान्यां कुर्यात्प्र-जापतिरस्य हिɱसितः स्यादिति यावदादेश मुत्तरे सर्वत्राथाप्यूर्द्धाना मेव सɱस्थानां कृतानां वदति देवा वा अग्निष्टोम मभिजित्योक्थानि नाशक्नु-वन्नभिजेतुं देवा वा उक्थान्यभिजित्य रात्रिं नाशक्नु-वन्नभिजेतु मित्यथापि नैतद्देवताः प्राहू राका सिनी-वाली सरस्वती विष्णुरिति सौविष्टकृतं खल्वेतत् सोमस्य स्थानं यदाग्निमारुतं स योऽयं देवताः शɱ-शिशस्ता अपातिरात्रे सती हैव प्र व्याहृत्य शɱसती-त्युक्थं तां प्रथमां मन्य इति गौतम एवं प्राम्नाह-र्मांश्चासमानि सवनान्यपुराद्रियन्त आर्भवच्छन्दाɱस्यनु विधीयन्ते प्रस्थितयाज्या ग्रहैश्च शस्त्रैश्चापाह मेत मेव मागूर्त्तिन मिव मन्ये यो ऽग्निष्टोमयाजीति ध्रुव मनु द्वादशस्तोत्रात्पूर्वं तत्प्रस्थितयाज्याभिर्वि-जानीम इति ॥ १ ॥

अतिरात्रीं प्रथमां मन्य इति धानञ्जय्यः कृत्स्नं पूर्वं कर्मापरीपादाया इत्यथापि स मिमीत एषा वा अग्निष्टोमस्य सम्मा यद्रात्रिरेषा वा उक्थ्यस्य सम्मा

यद्यग्निरिति कुतो दृष्टेन प्रमा स्यादित्यथापि नः स्तोमसमाम्नायः प्रागतिरात्रस्यैव स्तोमसमाम्नायो भवत्यथापि न उक्थ्यसमाम्नायः प्रागतिरात्रस्यैव प्रथम मुकथ्यानि समामनामो ऽथापि न कर्मणो यज्ञं सन्धिं *प्राहुरुपरि सन्धिभवात् स्तोमविमोचन मधीमहे यन्नून मन्या प्रथमा सङ्ख्या भविष्यत्याक्तरं स्तोमविमोचनं समाम्नास्यदित्यथापि प्रश्वद् बह्वृचा अतिरात्री मेव प्रथमा मधीयते तासां काम्या का सर्वाभिप्रायेत्याग्निष्टोमौ चातिरात्रौ च ब्रुवते शौचिवृक्षाः सर्वाभिप्राये अनवधारितकामे भवत इत्येकत्या अन्यो यज्ञः कामायाक्रियते सर्वेभ्यो ऽग्निष्टोम इति न काम मवधारयति ज्योतिष्टोमेनातिरात्रेणर्द्धिकामो यजेतेति नैव काम मवधारयति पशुकाम उक्थेन स्तुवीतेति काम मवधारयति सोऽग्निष्टिला परिसङ्ख्यिता भवतीति सर्वाः सर्वाभिप्रायाः सर्वासु काम्यानि विद्यन्त इति शाण्डिल्यस्तथा गौतमधानञ्जय्यौ सर्वाभिप्रायः खल्वयं ज्योतिष्टोमः स सर्वाभिरेव सङ्ख्याभिः सर्वाभिप्रायो भवतीति यदेतदवधारितकामेति पश्यामो वै वयं सर्वाभिप्रायेषु

* "कर्मणो यज्ञेषि"—इति ख।

काम, मवधार्यमाणं, यथोपवती ग्रामकामस्य प्रति-ष्ठाकामस्य रथन्तरं सन्निधास्येति ॥ २ ॥

तस्य खल्वस्य ज्योतिष्टोमस्य षड् व्यञ्जनस्थानानि भवन्ति प्रतिपद् गायत्रं निधनं विष्टुतिर्ब्रह्मसा-मोक्थ्यप्रणयः सन्निसामेति तेषां किं काम्यं किं सर्वाभिप्राय,मिति प्रतिपद्यत् खल्वस्य ज्योतिष्टोमस्य चरति तत्तत्सर्वाभिप्राय मथ यत्काम्यं निवर्त्तते तत्कामप्रतिपत्सर्वाभिप्राया सर्वा ह्यवधारितकामा भवन्तीत्युपवतीत्याहुः प्रथमाञ्चैना मधीमहे ऽपि तां ग्रामकामस्य ह ग्रामः सर्वाभिप्रायो भवतीत्यथापर-स्याश्चिरं दर्शयति ततश्चतुर्षु मासेषु शुनाग्नीयस्य लोके ज्योतिष्टोमोऽग्निष्टोम उपवती प्रतिपदित्येषा रथन्तरपृष्ठे ऽग्नियवती बृहत्पृष्ठे ऽग्नियवद् वार्हतं रूप मुपवती रथन्तरे ऽग्नियवती बृहतीति च माल्लविना सयापेनाऽ साहस्रोत्तमे स्तोत्रीयस्योत्तमां दर्श-यत्योभयसाम्यात्तां न प्रथमां ब्राह्मणेनैव तद्व्या-ख्यात मथापराहाभिप्रचनीये यत्पवस्व वाचो अग्निय इति तेन यज्ञमुखान्नयन्तीति प्रकृत्या मध्यं दर्शयति तदपि शश्वद् ब्राह्मणं भवतोते वाव प्रतिपदी सर्वाभिप्राये यदुपवती चाग्नियवती च कामाय वा

इतरा आक्रियन्त इति खरो गायत्रविधनानां प्रथमा(३*) विष्टुतीनां श्वैतनौधसे ब्रह्मसाम्नां षडुक्थानि सर्वाभिप्रायाणि भवन्ति साकमश्वं सौभरनार्मेधे हारिवर्णादण्शीये आष्टादंष्ट्र मिति तेषां कान्युक्थे कान्यतिरात्र इति सर्वेषां याथाकामीति शाण्डिल्यो हारिवर्णादण्शीये वा हारिवर्णाऽष्टादंष्ट्रे वोक्थान्ते कुर्यादिति गौतमो ऽतिरात्रे सौभरनार्मेधे तच्चर्य्यां जानीमो हारिवर्णादण्शीये वा हारिवर्णाष्टादंष्ट्रे वोक्थान्ते चैव कुर्यादतिरात्रे चेति धानञ्जय्यः सौभरनार्मेधे वोक्थान्ते न कुर्यादिति रथन्तरं सन्निपातत्वात् सर्वाभिप्रायं तद्विचरति तत्र यानि कामावधारणानि सर्वाभिप्राये स्तुतानि भवन्ति तानि खल्वेतानि व्यञ्जनान्येकजातीयान्येव समादध्यादेवं चाव्याहतः क्रतुर्भवत्यपि चैव मार्षेयकल्पो दर्शयति ॥ ३ † ॥

अथानुष्टुभस्य भागस्य का छन्दोभक्तिरित्येकाक्षरां ब्रुवते शौचिवृक्षास्तद्विजानीमो बह्वक्षरप्रवादो भवत्येकाक्षरा वै वागक्षरेणान्ततः प्रतिष्ठाप्य मक्षरं त्र्यक्षर मुच्छिष्यत इति हि भवतीति मर्त्यव

---

* स पुस्तकेऽयं पैदो नास्ति ।   † "४"-इति च ।

द्वात्रिꣳशदक्षरेति शाण्डिल्यस्तथा गौतमधानञ्जय्या-
वेता मनुष्टुबित्याचक्षाते ऽथापैना मनुष्टुब्वर्थे निधी-'
यमानानां पश्यामो ऽथापि यस्तावदकुशलं छन्दसा
मौक्थिक मनुष्टुभं पृच्छेदेता मेव द्वात्रिꣳशदक्षरा
माचक्षीत तत् खलु गायत्रं प्रातस्सवनं त्रैष्टुभं माध्य-
न्दिनꣳ सवनं जागतं तृतीयसवनं यदूर्द्ध मुक्थेभ्य
आनुष्टुभः स भाग इति कथ नु द्वादशस्तोत्र
आनुष्टुभो भागः स्यादिति सवनानि प्रति प्रविष्ट
इति गौतमो ऽष्टाक्षरा गायत्री हिङ्कारो नवम एका-
दशाक्षरा त्रिष्टुप् द्वादशाक्षरा जगती छन्दोभिरेवा-
नुष्टुभ माप्नोति यजमानस्थानवलोपायेत्यन्तस्थान
एष भाग इति शौचिवृक्षिरेकविꣳशस्तोमो वाक्सा-
मान्व एष नूनं द्वादशस्तोत्रस्यानुष्टुभो भाग
स्यादिति। सर्वैव षट्विꣳशदक्षरेति शाण्डिल्यस्तचे:
यच्चत्वार्यक्षराण्युपाहरति परोक्षीचिकीर्षन्निति पद
प्रत्यवरोहꣳ' शौचादितरेयो यद्येतद् ब्राह्मणं द्वाद
शाक्षर मेकादशाक्षर मष्टाक्षरं वाग्_ द्वाविꣳशील्य
पञ्चदशस्तोत्रे सवनानि प्रति प्रविष्ट इत्येव गौतम
ऽच्छावाकस्तोत्रीये शौचिवृक्षा अथ षोडशिनि सर्वै
चतुस्त्रिꣳशदक्षरेति शाण्डिल्यस्तत्र यद् द्वे अक्ष

उपाहरति परोचौचिकौर्यं न्निस्युपसर्गांचराणि शौचि-
वृचा दयाचरं पादए शौचादितरेयो ऽथातिराचे
सर्वेव हाविएशदचरेति शाण्डिलाम्ता यदभ्यासेन
करोति परोचौचिकौर्यंन्निति वैतहव्यस्तोचौये शौचि-
वृचाः ॥ ४ ॥

अथायए सन्धिरन्तर्भागं भवतीइ वहिर्भाग मिति
वहिर्भाग मित्याहुः समानेषु भागेष्वागच्छत्यथाप्यथा
छन्दसा भवयति वहिर्भाग मिवैव स तत इत्यन्तर्भाग
मित्यपरं का सा भक्तिर्या वहिर्भाग मितरायणेन
मुक्थैः सम्मिमीते ऽन्तर्भाग मुक्थानि भवन्त्यन्तर्भागः
सन् किम्भागः स्यादिति गायत्र इत्याहुः समानेषु
भागेषु पुनरुपक्रमे कोऽन्यो गायत्रवान् स्यादिति सर्व-
भाग इत्याहुः सर्वभागं पृष्ठए ह्यत्र रथन्तर मित्यानु-
ष्टुभ इत्यपरए राचानुवन्धतयेति क्रमे भवतीइ
समास इति क्रमे भवतीत्याहुः समस्तेऽचरे राचि-
पर्यायाः क्रमे सन्धिरित्यपि वा क्रमे राचिपर्यायाः
समस्तेऽचरे सन्धिरिति नैतदिहविज्ञायत इति
शाण्डिलायनो ऽमुत्र खल्वेतद्द्वराचे विज्ञायत इदं
पदस्य स्थान मिदं मध्यक्रमस्येदं वृद्धेरिदए समासस्येति
तच्छन्दि दिर्भागाः प्रकल्पयन्त इति विज्ञायत एवेति

वाजाः पदस्थान्यहस्सवनानि क्रमे षोडशी त मप्यभि-
विहारएष्वसख्येत मेवाक्षरक्रम मनु चिख्यापयिषन्
वृद्धी। राचिपर्यायास्त निपाश्वस्त्यश्वाद्यात्यसामानो
हि छन्दोमा इति तदपुरभयोः सन्ध्योः सतोरेत मेव
सन्धिरित्याचक्षते समासादित्येतेन सर्वैकाहेषु साम-
भागो व्याख्यातः॥ ५ ॥

अथ दशराचे कथं भागा इति। याथाकामी
भागाना मित्येक आङ्गरस्त्यैवैकभाग्य मस्ति सर्व-
भाग्य मपि तु चाहःश एव भागाः। खुर्गायचः प्रथम-
स्त्वाहस्त्रैष्टुभो द्वितीयो जागतस्तृतीय आनुष्टुभः
षोडश्यानुष्टुभं दशमं तदपोव मित्र ब्राह्मणं भवति
प्रातस्सवनेनैव प्रथमस्त्रिरात्रः कल्पते माध्यन्दिनेन
सवनेन द्वितीयस्तृतीयसवनेन तृतीयो ऽग्निष्टोमेन
साम्नैव दशम महरित्यथापरं गायचं त्रैष्टुभं जागत
मिति प्रथमस्त्राह एव मेव द्वितीय एवं तृतीय आनु-
ष्टुभः षोडश्यानुष्टुभं दशम मथापरं गायचं त्रैष्टु
जागत मिति प्रथमस्त्र्यह आनुष्टुभो द्वितीयो गाय
त्रैष्टुभं जागत मिति तृतीय आनुष्टुभः षोडश्यान
ष्टुभं दशम मथापरं गायचं त्रैष्टुभं जागत मानुष्टु
मिति प्रथमश्चतुरह एव मेव छन्दोमचतुरहो वहिभ

पञ्चमषष्ठे इत्यथापरं पदस्थः प्रथमस्त्र्यहो ऽवरस्यो द्वितीयो वृद्धिस्थस्तृतीय आनुष्टुभः षोडश्यानुष्टुभं दशमं ते खलु शश्वत्स्तनविनो भवाननु व्यूहन्ति जगती प्रातस्सवन मागमं तत्र जागतच्छन्दसा भव- यिष्याम इति न वय मनुव्यूहामः सवनभक्तित्त्वाचा एव भवेषु स्या इत्यथ संवत्सरे चतुर्विंशं लुब्धभाग मिति शौचिवृच्चिर्गायत्रं वा स्तोमच्छायेण त्रैष्टुभं वा स्थानेन सर्वभागं वैकाह्नादित्यथाभिप्लवा ऐका- हिका वा स्तोमच्छायेण षाडहिका वा तन्त्रच्छायेण त्र्यहभागात्स्वरसाम्ना मानुष्टुभो विषुवाश्चातुर्थ्या- त्सर्वभागो वैकाह्नादिति ॥ ६ ॥

अथाहीनेषु दिरात्राणां गायत्रं पूर्वं महस्त्रिभाग मुत्तरं यस्याग् ब्रह्मसाम्नस्तत् त्रैष्टुभं ब्रह्मसामप्रभृति जागत माषोडशिनः षोडशिप्रभृति पर मानुष्टुभं त्रिरात्राणां गायत्रं प्रथम महर्जागतं द्वितीयं त्रैष्टुभं तृतीयं वैदत्रिरात्रे सर्वभागान्यहानि चतूरात्राणां गायत्रं त्रैष्टुभं जागत मिति त्र्यहो ऽवरात्परे चतुर्थं मिति शौचिवृच्चिः समस्ते ऽवर इति गौतमः पञ्चरात्रे- ष्ववराधरयोरेव चतुर्थपञ्चमे इति शौचिवृचिः सम- स्तेऽवर इत्येव गौतमः षडहप्रभृतिषु दाशरात्रिका

भागा यावद्यावदभिप्राप्नुयुरथ यत्राहीन एकाहैर्व-र्त्तेत सर्वभागास्तत्रैकाहाः स्युरित्येक आहीनिक-भागा यथास्थान मित्यपर मेतेनाहीनेषूपधीयमाना व्याख्याता अथ यदूर्ध्वं दशरात्रादुपधीयेरन् ये वा मध्ये दशरात्रस्य भागपर्वणि सर्वभागा एव ते स्युरेतेन सत्रे-षूपधीयमाना व्याख्याता अहीनैकाहसमासा ह्येव सत्राणि भवन्ति ॥ ७ ॥

अथ सुब्रह्मण्यायां विचारयन्त्यृग् खल्वयं भवती३ सामेत्यृग्भवतीत्याहुर्ऋच द्वाख्य नामधेयं सुब्रह्म-ण्येति सामेत्यपरं गीतं हि भवत्यथाप्याहुर्मन्त्र एव खल्वयं शिथिलो भवत्याह्वानार्थस्तस्येय मध्यायियं स्यादित्यथाप्याहुर्नैवेय मृग् न साम सुब्रह्मैवेद मिति ब्रह्मणो भवती३ उद्गातुरिति ब्रह्मणो भवतीत्याङ्ग-रेतेन ह्यग्रे संयुज्यते ऽथापि ब्रह्मा सुब्रह्मण्य इति नामधेयसारूप्यादथाप्येवं सर्वाहोरात्रा वषटकारि-ण्यो भवन्त्युद्गातुर्ह्याग्नीध्रः सम्पद्यत इत्युद्गातुरित्यपरं गीतकारी ह भवति स यदभक्षेभ्यः पुराख्य भक्षेभ्यः कर्म प्रवृज्यत इत्यथैतानागतत्वात्कालादहीनेषु सत्रेषु याजमानान्नामग्राहः किमर्थ इत्युच्चावचचरणास्त्रियो भवन्ति स इह देवसाक्ष्ये च मनुष्यसाक्ष्ये च येषां

पुत्रो भविष्यामि याꣳश्च पुत्रान्वक्ष्ये ते मे पुत्रा भवि-
ष्यन्तीति शाकटी मन्ववरुह्याह्वयेद्राज्ञो ऽप्रत्यारोहा-
याप्रत्यारोहाय ॥ ८ ॥

अथातो दशरात्रस्य ब्राह्मणेनैव द्रव्यसमुद्देश
उक्तो यानि चैतानि ज्यौतिष्टोमानि द्रव्याणि यानि
च पृष्ठैः समानरूपाणि यानि च दशरात्रेण समान-
सङ्ख्यानि यथैतव्यथमानि प्रथमद्वितीयानि द्वितीय
इति स्थानतोऽपि समानꣳ द्रवाꣳ सम्पश्येदथैताः
सप्त नाम विभक्तयः स तं तेन तस्मै तस्मात् तस्य
तस्मिन्नित्यामन्त्रिता ऽष्टमी स खलु विभक्ति मामन्त्रितां
प्रथमेऽहनि करोति कस्य हेतोरिति प्रत्यक्षभक्ति रथ-
न्तर मामन्त्रितस्य न परोक्ष मस्तीत्यथाप्येषा प्रथ-
माग्निमन्थनीया भवति तां चतुर्थे ऽहनि करिष्यन्
भवति त मिति द्वितीया तां द्वितीये तेनेति तृतीया
तां तृतीये तस्मा इति चतुर्थी तस्या न द्रव्यं विद्य-
मान माङ्गरेका मुदाहरन्ति प्रतवासीं नवासीं
धीति सम्नय इति सैषा प्रतवती भवति भागान्ते
ऽपरूपा स इति प्रथमा तां चतुर्थेऽहनि करोति कस्य
हेतोरिति प्रत्यय एष भागानां प्रत्यय एषा विभ-
क्तीनां प्रत्यये प्रत्यय मथापि नामधान्येषा भवत्येतस्मि-

ऽहन्यग्निं जनयन्ति जातवेदो नाम धीयत इति तस्य ब्राह्मणं भवति देवा वै श्रिय मैच्छंस्तान्न प्रथमेऽहन्य-विन्दन्न द्वितीये न तृतीये तां चतुर्थेऽहन्यविन्दन्निल्येतां श्रिय माह नामधेयं ह विभक्तयः श्रिता भवन्तीत्यथा-ष्येषा द्विसंश्रया पञ्चमे ऽहनि भवति तस्येति वा तस्मादिति भवतीति गौतमस्ताः शश्वदेके चतुर्थी ब्रुवते तां ततो नामधान्या प्रच्युता मन्यतरस्मिन्नहन्य-नुगृह्णाति तद्येव मिव ब्राह्मणं भवति तेनो श्रीः प्रत्युपोदितेति (नैव*) ब्रह्मणं आज्ये निरुच्यत इन्द्रा-त्वरि तन्वं मम इति तस्मादिति तस्येति भवतीति धानञ्जय्यः सा षष्ठी ता सामन्त्रितया प्रच्युता मिहा-नुगृह्णात्यथापि तयोः पूर्वयोस्तृतीयया समानं द्विव-चनं स तथैव ते उपाप्ते श्रमंस्तापि वा प्रत्यवरोहार्थं एवाकरिष्यत्समूढाज्ये निरुच्यते ऽग्ने स्तोमं मनामहे सिध्रमद्य दिवि स्पृशो देवस्य द्रविणस्यव इत्यभविष्य-दित्यथापि व्यूढाज्य एव भवति तव श्रियो वर्ष्यस्येव विद्युत इति श्वक्रियत इत्यभविष्यदित्यामन्त्रितैव षष्ठे भवत्येवमाद्यवसानसमाधिरिति ॥ ६ ॥

अथैषा स्वरविभक्तिरोग्मनं प्रथमे वासिष्ठं

* नैमे पदे ख-पुस्तके ।

द्वितीय उभयतःस्तोभं गौतमं तृतीय आभीशवं चतुर्थ आनूपं पञ्चम इहवद्वामदेव्यं षष्ठे ऽथैषा निधनविभक्तिर्नौधसं प्रथमे ग्रैतं द्वितीये महावैष्टम्भं तृतीय आथर्वणं चतुर्थे बार्हद्गिरं पञ्चमे गोष्ठः षष्ठेऽपैरपेडाविभक्तिः कालेयं प्रथमे माधुच्छन्दसं द्वितीये रौरवं तृतीये पृश्नि चतुर्थे रायोवाजीयं पञ्चमे गोष्ठ एव षष्ठे ऽथैषा छन्दोमेष्विडाविभक्तिर्जराबोधीयं सप्तम इडानां सङ्कारो ऽष्टमस्य सतो नवमे ऽहनि क्रियते प्रतीचीनेडङ्काशीतं नवम उत्सेधो दशमे ऽथ नौधसे वद्दतीन्द्रङ्गीर्भिर्हवामह इति तत्खलु हवामह इत्येव कर्त्तव्यं विधिप्रमाणाः कथ मयथाविधि कुर्यामेत्याम्नायदैतेन ब्राह्मण मुपवर्णयतीत्यपरं तन्नियोगाय न प्रभवतीत्येतेनैतद्व्याख्यात मक्षान्तसमुद्रः परमे विधर्मन्निति यानि चैवञ्जातीयान्यथाचारे वदति यः पुरा पुण्यो भूत्वा पश्चात् पापीयान्त्स्यादाचारं ब्रह्मसाम कुर्वीतेति किं तस्य स्थाने स्यादित्येते एवान्योन्यस्य* स्थानं व्यतिहरेन्नौधस मुष्णिहि कुर्यादिति तदाहुर्व्यतिहरति चेद्यन्न बृहत्योडशिसाम स्याद्गौरीवितं नूनं द्वितीयस्याह्नः पृष्ठं कुर्यादित्यथ वै सञ्चारये-

* "स्यादित्येते वान्नीयस्य"–इति ख।

दिति * सञ्चारयति चेद्गौरीवित मेवानुष्टुभि कुर्या-द्गौरीवितं षोडशिसामेत्यथ वै प्रतिनिदध्यादिति प्रतिनिदधाति चेद्यत्र बृहत्षोडशिसाम स्यात् किं तत्र बृहत्पृष्ठं द्वितीयस्याह्नः पृष्ठं कुर्यादित्यथ कथं स्यादिति सञ्चारयेदहर्नानाहास्सु यानि सञ्चारि-धर्माणि स्युः प्रतिनिदध्यात् समानेऽहनि व्यतिहरेद्यत्र व्यतिहार मभिरूपं मन्येत प्रतिनिधिस्त्विहाभिरूप-तरः पौष्कल मुष्णिहि कुर्यादेतच्च ज्योतिष्टोमानां द्वयानां दशरात्रे ऽनिहितं भवत्यपि च यदनिधनं रायन्तरे ऽहनीति यज्ञायज्ञीय मग्निष्टोमसाम यज्ञे यज्ञे कुरुतेति तदेवाभिवदत्यथापेत्य तृतीयसवनं सामान्यस्त मदिदर्शयिषीत् ॥ १० ॥

अथ वैरूपे वदति यथा मण्डूक आट् करोत्येवं निधन मुपयन्तीति कथेदं ब्राह्मणं स्यादिति कृता राथन्तरीडाकृता बार्हतीति कौत्सस्तदिद मकृत-कारं ब्राह्मण मेर्डेडाब्राह्मणं स्यादिति पञ्चमेडेयं प्रत्याहृता भवतीति गौतमस्तां परोक्षीकृत्याभि-व्याहरेयु रेवं पञ्चमेऽहन्ययातयामा भवतीति तद-पेत्य मिव ब्राह्मणं भवत्ययातयामताया इति तत्र

* "सञ्चारयीति" ख।

कः परोक्षीभाव इत्याकारटकारौ वा कुर्युरिकार-णकारौ वैव मेकवर्णविकार इकारन्तेनाथिकारी-कुर्युरेतस्मिन् परोक्षीभाव उपलभ्यत इति यद्दैवतं व्यत्यस्यति वैरूपे विरूप मचिकीर्षेद्वर मेवेद महः सत्पर मभ्यस्तं भवतीत्यपरं वात्यासि वात्यासं करि-ष्यामीति स्तोत्रवशेनेति धानञ्जय्यो यदवात्यस्यन् यद्-दैवतं पदा यत् प्रतिहारयिष्य इतिप्रत्यवेतस्तथा प्रति-हारो ऽभविष्यद्यद्यु वै दैवतायै वहिर्ऋचं प्रतिहारो ऽभविष्यदथैत्य मनतिप्रत्याहृतोऽन्तर्ऋचं भवतीत्यथा-प्यस्यैतं छान्दस मध्यायं विद्यमान माहुरप्यथ खल्वाह द्वादश वैरूपाणि भवन्तीति कस्येदं ब्राह्मणꣳ स्यादिति संवत्सरब्राह्मण मित्याहुः संवत्सरे द्वादशक्रतवो होतृषाम भवति तस्येदꣳ संवत्सराग्निं वदेदिति ॥११॥

अथ प्रमꣳहिष्ठीये वदति हिꣳसितो ऽन्वीचेत य मिच्छेत्प्रस्ज्यमानं ( न * ) प्रस्येयादिति त मनुगा-येद्विचित्य मग्विति कुम्य सवां सकृद्युदृत्याशायं न प्रस्येयादिति काकुभ उक्थः प्रणयः पृष्ठच्छन्दो-ऽन्वभिवृद्धि रथ स्वःपृष्ठस्याङ्गिरसस्य निधनयोरानु-पूर्वा विवदन्ते स्वःपूर्वं मिडोत्तरेत्येके एव मेतयोः

---

* ख पुस्तके एतत् पदं नास्ति।

सामान्तरयोरानुपूर्वीं भवतोऽपां वयं पूर्वी कूर्म एव मनयोः समानोपायादभिव्याहारं पश्यामो यथा राजने माधुच्छन्दस इत्यथ वैराजं चानुतोद मेके कुर्वन्त्येवं छान्दसोऽध्याय इति चतुरनुतोदं वय मेव माचार्यवच इति तेन वात्समछ समादध्यायदीदं चानुतोदं तद्यदि चतुरनुतोदं तदपेव मिव ब्राह्मणं भवत्येतस्मिन् वैराजं प्रतिष्ठित मित्यथ कतमे विष्टम्भा इति देवता इत्याहुर्देवताभिः पदानि विष्टम्भानीति तदाङ्ग रेकादशेमा देवता दशक्षरवो विष्टम्भातीति दशैताः सत्यम्प्राया भवन्त्यपि वा य एते देवतान्तरेषु दशस्तोभास्तान् विष्टम्भानवोचत्तैर्देवताविष्टब्धा इत्य-थैतयोरन्तरयोर्विवदन्त ऋगन्तरे स्तोभान्तरे इत्यृगन्तरे इति लामकायनस्तदभिव्याहारेण जानीमो यादृशे इमे ऋगन्तरे तादृशे इमे भवत इत्यथापरादित्यसदृशं वैराजं यादृग इत आदित्यस्तादृशः परस्तात्तद्रूपं दिदर्शयिषन् प्रथमे ऋगन्तरे अन्त परिहरत्यथापुरा-ञ्चावचाः सामवृत्तयो भवन्ति यथैकवत्साभ्युपेतानि पुनरारब्धानीति नान्यां मन्येत स्तोभान्तर इति धानञ्जय्यः पश्यामः खलु पदानुरूपान्स्तोभानृचो-वावयन्तो यथैतज्जनदत्या ऋचि जनदान्स्तोभो

ऽप्रसिद्धवतोऽपि राचोग्रोर्व्व मिमे पीतवत्या सूचि पीतवतो स्तोभाचरे भवत इत्यथापगादित्यसदृशं वैराजं यादृश इत आदित्यस्तादृशः परस्तात्तद्रूपं दिदर्शयिपन्यदानुरूपे स्तोभाचरे अन्तं परिहरति नो एतत् क्वचन पश्यामः प्रथमे ऋगचरे अन्तं परिक्रियमाणे इत्यथैपातिजगती भावप्रत्यये छन्दस्तोमरोह मद्दिदर्शयिपीद्विराजं वा वैराजे ऽहन्यचिकीर्षीद्विराडियं पञ्चाशदक्षरा बृहत्यावुत्तरे तेन बृहतीभ्यो ऽनपेतं भवतीत्यनपेतम्भवतीति ॥ १२ ॥

अथैतासु महानाम्नीषु विप्रतिपादयन्ती दशाचर मिद मशाकुर मित्यशाक्करी प्रथमा द्विपदा शाक्कराणि त्रीणि पराणि पदानि धातुरशाकरः पञ्चाचरः स एष कृताकृतो भवति वत्सो शाक्करो ऽष्टाचर ऊधः शाक्कर मष्टाचर मभ्यासवत्तश्च द्वाचरान् पादादीन् मतीतोदा इत्याचचते पुरुषो शाकरः पञ्चाचरः शाक्कराण्येव त्रीणि पदान्यभ्यासो शाक्करोऽष्टाचरस्तश्च प्रस्तावयति न प्रतिहारयत्येते नैत्रोत्तरयोः शाक्कराणि चाशाक्कराणि च व्याख्यातानि द्वाध्यासोत्तमा शाक्करो भवत्यभ्यासा किमर्था इति लोकोक्ताः शक्र्यै साभ्यासा इमे लोका भवन्त्वग्निर्वायुरिति पूर्वयो-

रादित्यश्चन्द्रमा इत्युत्तमस्य तस्माद् द्व्यभ्यासोत्तमा
शक्वरी भवत्यथ खल्वाह व्यौपशाः सꣳस्तुता भवतीति
कस्येदं ब्राह्मणꣳ स्यादित्युत्तमाया द्व्यभ्यासाया इत्या-
हुरेकाभ्यासे पूर्वे द्व्यभ्यासोत्तमा तस्या इद मभिनन्दं
ब्राह्मणं वदेदित्यपि वा समस्तब्राह्मण मेव स्याद् वयोप-
शोत्तमेत्यूधसोभ्यासब्राह्मणं मन्य इति वार्षगण्य एव
मिव ब्राह्मणं भवतीडे ऽभितो ऽथकारं तस्माच्छृङ्गे
तीक्ष्णीयसी स्तूयादित्युपशोक्तानि शृङ्गाणि भवन्ती-
त्यथ खल्वाह दिशः पञ्चपदा दाधारर्तून् षट्पदा
छन्दाꣳसि सप्तपदा पुरुषं द्विपदेति प्रतिलोमं
वदति ● वास्तश्छिद्रोहो भविष्यतीति सप्तपदा प्रथमा
शक्वरी षट्पदा द्वितीया यद्धि प्रथमाया उत्तमं पदं
तद् द्वितीयायाः प्रथमं प्रगाथः सानुपृष्ठ मिति पञ्च-
पदोत्तमा यद् द्वितीयाया उत्तमं तत् तृतीयायाः
प्रथमं च द्वितीयं च नवपदाः पुरा बभूवुरिति लाम-
कायनस्ताभ्यो रेवत्यो निर्मिता द्वे प्रथमायाः पदे
त्रीणि द्वितीयायाश्चत्वारि तृतीयायास्तदप्येव मिव
ब्राह्मणं भवति सिमाभ्यो ह्यधि रेवत्यः प्रजायन्त
इति नवपदा एव भविष्यन्तीत्यूधस्याभ्यस्य पदं चानु-

---

● 'भर्गा'-इति च।

सᳫंहरत्यथापि नवपदा एताभिरूपतरा न विपर्यायि त्रिणव इति ॥ १३ ॥

॥ इति निदानसूत्रे तृतीयः प्रपाठकः ॥

---

॥ अथ चतुर्थः प्रपाठकः ॥

अथ खल्वाह गायत्र मयनं भवति त्रैष्टुभ मयनं भवति जागत मयनं भवतीति किमयनᳫं स्यादित्यूधसि विकारो दृष्ट इति गौतमधानञ्जय्यौ य एष मध्य ऊधसो ऽथकारस्तᳫं स्वरिति कुर्यात्तद्गायत्र मयन मयेति त्रैष्टुभ मिडेति जागतं तदाहुर्विकृतो ऽथकारो ऽविकृतस्य को विकारो ये चाभित इडेति विकुर्यादिति सर्व मेवोधर्विकारार्थ मागच्छतीत्यपरᳫं सर्व मेवोधर्विकुर्यादित्ययाप्याङ्करविकृत मेवोधः स्या दन्त्येडा मेव कुर्यादन्यास्वानि कर्माणीत्यथापराह्णुरविकृतेषान्त्येडा स्यादेव मागन्त्येडायास्तद्विकुर्यात्तदायनं भवतीति ते कस्माद्धेतोर्जागत मयनᳫं समारभ्यान्तेति नेदं जागत मिति शाण्डिल्यायनो यानि

त्वत्र निधनानि तानि स्वरिति कुर्यात्तद्गायत्र मयन मपेरति त्रैष्टुभ मिडेति जागत मपेरदं मित्यणिधनए सर्वाभिमायं ययेद मधीमह इत्यूर्ड्ए शक्वरीभ्यः पञ्च पुरीषपदानि पञ्चाक्षराणि तेभ्यः प्रस्तावयति न प्रतिहारयति न शश्वदेकेऽध्यासपुरीषपदानां प्रस्तावयन्ति प्रतिहारोपायान् प्रस्तावोमेयादिति प्रस्तावयामो वय मन्यदिदए शक्वरीभ्यस्तत्कथ मप्रस्तुतं क्रियतेति सएरोधात्तु नूनं प्रतिहारोपेशात्ते खल्विमे वहवः प्रस्तावाः कथ मोङ्कार इति प्रस्तावनिमित्त ओङ्कार इत्येके प्रस्तावे प्रस्ताव ओङ्कारेणाद्दीतायापयाह रसो वा एष साम्नां यदोङ्कारो नैतेनातिरेको ऽस्तीति प्रथम एवप्रस्ताव इत्यपरः स्तोत्रीयाया एतान्यङ्गानि भवन्ति सहतु खलु स्तोत्रीयाया ओङ्कारो भवत्यथापि परिचष्ट उर्द्धं प्रतिहारादोङ्कारेणादान मथाप्येव मन्यैः सामभिः समाधिरिति ॥ १ ॥

ते खलु शश्वदेके पुरीषपदैः प्रतिपद्यन्ते पञ्चविधेन पञ्चमखाह्नः पृष्ठं मतिपत्स्यामह इत्यथापेरवए शक्वर्यवसानए स्तोत्रं भविष्यतीत्यथापराह गोष्ठः पुरीष मिति कृत्वा वै गोष्टं पशूनुपाकुर्वन्त्यन्तो वयं कुर्म एवं च छान्दसो ऽध्यायोऽपि चैवंपञ्च-

विधं पञ्चसूत्राङ्गः पृष्ठ मनुसंख्याप्यत इति यद्दे-
तद्गोष्ठः पुरीष मितीष्टा वै पशून् गोष्ठं कुर्वन्त्यथापि
पश्चार्द्धसेवि पुरीष मिति तत् खलु सर्वाभिः सह
स्यादित्याहुस्तृचद्दष्टय इमा भवन्ति लोकद्दष्टयस्तदि-
द मन्ते ऽनुषङ्गस्थाने समाम्नातं भवत्यथापेत्रवं सर्वाः
सपुरीषा भविष्यन्तीति व्यवायस्थाभविष्यदितिगुरु चाथ
वै विष्टावान्तेषु विष्टावसमाधय इति व्यवायस्यैव
गुरु चाथ वै पर्यायान्तेषु पर्यायसमाधय इति व्यवाय-
स्यैव गुरु चाथ वा उत्तमा मेवानुचरेदेतया हि
सहोत्पन्नं भवतीति व्यवायस्यैव गुरु च सक्रृदन्ततः
स्यादित्याहुरेतच्चासां लघिष्ठ मपि चैव मव्यवायो-
ऽथापि परिनिष्ठायाशिष मुद्दिरवान्ते ऽनुद्यां वदि-
ष्याम इत्यथापि पश्चार्द्धसेवि पुरीष मिति तासां धर्मो
नियुज्यते न व्याहरेन्नाग्नीयादभिनद्याच्चव्यासीत पूर्वे
कोऽयं ब्रह्मणो भवति तन्नो ह प्रतिलभ्य प्रद्दहेदेत
मेवाहं ब्रह्मचर्यधर्मं मन्य इति गौतमस्तत्तुतिगुरु
चाभविष्यदपि च नो ह मरणाशङ्क मिमस्तु सर्वच्छ-
न्दसा भवन्त्यासां मे चरतः सर्वच्छन्दसा मिव व्रतं
चरितं भविष्यतीत्यथाप्याहुर्यानि रूपाणि ब्रह्मचारी
न पश्यति तान्यासन्नाम्नाति लब्ध्वा हैनांत्समावर्त्य

भवति त मेतद्रूपेभ्यश्च रसेभ्यश्च समवृत्स्यन्मन्यत इति ॥ २ ॥

तासां खलु त्रीन्त्संवत्सरान् ब्रह्मचर्यं चरेत् कृष्णवस्त्रः कृष्णभक्ष आचार्याधीनस्तपस्वी तिष्ठेद्दिवाऽऽसीत नक्तं सायं प्रातरुदकोपस्पर्शी सर्वभूतेभ्यः पन्थानं ददद्वर्षति शरणं नातीयान्नित्यं स्निग्धवासा बुभूषेदुदकसाधवो हि महानाम्ना इत्येवं खलु चरतः कामवर्षी पर्जन्यो भवत्युदकोपस्पर्शनं किमर्थमित्यनुक्ताः शक्वर्यस्ता एव प्रविशन्मन्यत इत्यपि वा पशूना मेव पायनार्थं स्यात् पशूक्ताः शक्वर्य इति खलु प्रथमां स्तोत्रीया मनुगायाहोरात्रे वाग्यतः परिगृह्याच आसित्वा तस्याः संवत्सरं ब्रह्मचर्यं चरेदेव मेव द्वितीयाया एवं तृतीयायास्ते खलु शश्वदेके प्रथमत एव परिगृह्णन्ति प्रथमत एव यथा न प्रवक्ष्यतीत्यध्यास प्रत्येकेऽध्यास प्रत्यध्यसिष्यामह इति त प्रातरभिवीक्षयन्ति यान्यप्रवक्ष्यं मन्यन्ते योऽग्निं वत्स मादित्य मपोऽभिव्यख्य मित्यपोज्योतिर भिव्यख्या मित्यग्निं पशूनभिव्यख्या मिति वत्सं स्वरभिव्यख्या मित्यादित्य मथाप्येतद्विवैता भवन्त्याप इवाग्निरिव वत्स इवादित्य इवेत्यथ खल्वाह पार्थुरश्मं राज-

न्याय ब्रह्मसाम कुर्याद् बार्हद्गिरं ब्राह्मणाय रायो-
वाजीयं वैश्यायेति पार्थुरश्मं चेद् ब्रह्मसाम स्याद्बार्ह-
द्गिरस्यैवर्क्षु कुर्याद्यद्यु वै रायोवाजीय मेते एव बार्ह-
द्गिर रायोवाजीये सस्तोत्रीये अन्योन्यस्य स्थानं
व्यतिहरेत् कथ मुभयेषु समन्वयत्स्विति भूम्नो वर्णं
नयेद्गृहपतेरित्येकेऽपि वा बार्हद्गिर मेव कुर्यान्नित्यञ्च
श्रेष्ठवर्णीयं चेति वैश्वामित्रस्तोत्रीये षोडशिना स्तूय-
मान आष्टमिक मुक्थस्तोत्रीयं प्रति निदध्यात्स्वा-
राय वीङ्कस्तोत्रीये वसिष्ठस्यप्रिय मनुकल्पयेद् वसि-
ष्ठस्यप्रिय मनुकल्पयेत् ॥ ३ ॥

अथ षष्ठेऽहनि रेवतीषु वारवन्तीयं पृष्ठं भवति
तदेके प्रत्यक्षं ब्रुवत एतत्प्रकृतौ दृष्टं भवतीत्यथापि
यद्रेवत्यः पृष्ठ मभविष्यत्पवमान आसां धर्म मक-
रिष्यन्नित्यथाप्यानुरूपाग्निष्टोमसाम्नि वारवन्तीयस्यै-
वानुरूपं कल्पयतीति रेवत्य इत्यौद्गात्री रेवती षष्ठा-
नाउ स्तुतिब्राह्मणं भवति तासां धर्मो नियुज्यते
तद्भवां घोषोऽन्वसृज्यतेत्यथापि प्रतिपद्भिः पृष्ठानि
संवर्णयन् रेवतीरेवाभि संवर्णयति षष्ठं च विश्वजिति
चाथापि पृष्ठास्तोमात् पृष्ठानि च्यावयन् रेवतीरपि
च्यावयत्यथाप्यनुगृहीतपृष्ठे रेवतीरेवानुगृह्णातीत्य-

घापि परोक्षपृष्ठोपाद्यपृष्ठयोरनुगृहीतपरोक्ष इति वार-
वन्तीय मेवानुगृह्णाति यद्वेतद्वेतत्प्रकृतौ दृष्टं भव-
तीति ब्राह्मणेनैव कारणं वदति यद्वेतत्प्रथमान
आसां धर्मं मकरिष्यन्निष्युपाम्नं पृष्ठत्वप् रतोची-
येण मन्यते यद्वेतद्वारवन्तीयस्यैवानुरूपं काल्पयती-
त्युक्तं वारयन्तीयस्य परोक्षं तदेतद्रेवतीपरोक्ष मेव
भवतीति ॥ ४ ॥

अथ खल्वाह प्रायणतो द्विपदाः कार्या३ उदय-
नता३ इति कथं प्रायणतः स्युरिति प्रथमेऽहनीत्याङ्ग-
रेतद्धि प्रायणं भवत्यथापि दृश्यते प्रायणीयस्योक्थत्वं
चतुर्विंशस्य तथा पृष्ठ्याऽग्निष्टोम्यं यथाभिप्लविक
द्वितीय इत्यपर मेतदुक्थानां प्रायणं भवत्यथापेव
मुकथ्यव्यतिहारः सिध्यत्यथापेवं प्रकृतिसविधतरं
भवतीति कतमावृत्ते पृष्ठ्ये सङ्ख्याधर्मा इत्यावृत्त-
स्यापान्त एव स्युरित्येके यदा षडहः सन्तिष्ठत इति
हि भवतीत्यथापि षडहधर्मा इत्याचक्षते न चेतत
पृष्ठस्य साधियो यथो च प्रथमस्य त्रयस्त्रिंशस्य त्वेव
संख्याया मित्याचार्या एतद्‌ावृत्ते रूपं य इत उपक्रम
धर्मः स परस्तात्सङ्ख्याधर्मो यः परस्तात्सङ्ख्याधर्मः
स इत उपक्रमधर्म इत्यथापि य एतानावृत्तस्यान्त

परिहरेत्सर्वाण्येव नूनꣳ सोऽन्तलक्षणान्यावृत्तयान्तं परिहरेदिति ॥ ५ ॥

त्रीणि दशरात्रस्य विच्छिन्नानीति शाण्डिल्यः पञ्चम मभितो द्वे षष्ठे पूर्वं मेकं * तेषाꣳ सन्तानाय सन्तनीत्यनुपूर्वꣳ सूक्तानुरूपाꣳश्छन्दोमान् करोति पृष्ठाश्छन्दोमाना मकृतकाराणायापप्रक्रतवादः प्राक् सूक्तानुरूपयतेत्यथापि प्रज्ञापयति सꣳस्तावेषु प्रजास्थान मभ्यवर्द्धयिषीद् बृहद्रथन्तरे पृष्ठे न हि षाडहिकान्यनुभवन्ति नो व्युत्सुसीद्यापि शिथिलोक्तास्तेषां प्रत्यक्षाभ्यां पृष्ठाभ्यां दृढीभावो भविष्यतीत्यथापि तम उक्तास्ते एते ज्योतिषी साम्नाꣳ स वाय हेतोर्बृहत्पूर्वं युक्त इति क्रतयोः क्रियमाणयोरेषाक्रतक्रतिरथापि स्तोमप्रत्यवाये पृष्ठतो रोह मदिदर्शयिषीद्यर्यौक्तं बृहदित्ययापीदं बृतस्थानं बृहदाश्रितया व्रतस्य मानसतया ते व्यत्यासमयुक्ते तत्कुशलं वाड्धिधनानि माध्यन्दिनान्यन्यान्यैडान्याभवान्यानि सवनच्छन्दसोरनुग्रहाय ॥ ६ ॥

अर्कपृष्ठान्यैद्गिनो ऽधीयते सेषा छन्दोमानां पृष्ठभक्तिस्तेषां पृष्ठत्वे तिष्ठमानो न साक्षात् करोति

---

* "दशाद्दं मेकं"—इति ख ।

बृहद्रथन्तरे वा निकामयमानः पूर्वां चार्भवे करो-
त्येवं नेदीयसि पृष्ठानां सप्तमे ऽहनि कृताकृतौ भव-
त्यब्राह्मणविहितत्वात्कर्त्तव्य इत्याचार्य्यश्छन्दोमानां
चार्कसमाधिर्यथा चैतान्यैङ्गिनो ऽधीयते छन्दोगाथा-
येन मेके ऽधीयते ऽथापि सत्रोधे ऽनुष्टूयते यथा त्रिवृ
ति दशरात्र इति नवमे ऽहनि रमे स्तोमे सति साध्या-
सां बृहतीं करोति कस्य हेतोरिति साध्यासा पूर्वे
ऽहनि कृता स एव समत्यययवायो ऽथापि वह्निर्यं चरति
तस्याः पथ्यता मापिपादयिषीहासराचिकाणां
द्रव्याणां पथ्याख्या ऽथाप्येतस्या मेवैतत् सामयोगं
साधीयोभ्यसुत इति चैकाकुभस्य निधने विवदन्ते
पदनिधनाना मित्येके यादृशे इमे ऋगचरे तादृशे
इमे भवत इति वह्निर्गिधन मित्यपरे वह्निर्गिधन-
स्थाने च युज्यते ऽपि चास्य निधनवादो भवति वह्नि-
र्गिधनाना मुत निधनवादा भवन्तीत्यथाप्यापद्यते
ज्योतिर्विचारान्यत्पदनिधन मभविष्यद्युत् परेत्यत
ज्योतिष्टोमीं मात्रां नास्य प्रतिनिष्कारं कल्पयति
वह्निर्गिधनस्यैव सत इति सत इति ॥ ७ ॥

अथ दशमे ऽहनि चतुर्ऋचं होतुराज्यं समा-
मनामसास्य मध्यमे भवतस्तानूनपातौ च नाराशंसौ

च द्वयानि कुलानि भवन्ति तानूनपातन्त्वानूनपातेषु कुर्यान्नाराशंसीं नाराशंसेषु वसिष्ठशुनका अत्रयश्च वध्र्यश्वाश्वकाण्वाश्च सङ्कृतयश्चैतानि नाराशंसान्यथेतराणि तानूनपातानीति कथ मुभयेषु समवयन्तिरिति भूम्नो वशं नयेद्गृहपतेरित्येके ऽपि वा तानूनपाती मेव कुर्यादेषा भूयिष्ठानां कुलानां भवत्यपि चैता मेवैके ऽधीयते ऽथाप्येषा समारब्धतरा भवतीत्यथ मानसं दशमस्य भवती३ सर्वस्या३ एव दशरात्रस्येति दशमस्येत्याहुर्नैतद्दशमेनाह्ना * विप्रयुज्यमानं पश्यामो ऽथापि दशमधर्मा इत्याचक्षते ऽथापि सार्द्धं मानसेन विराट् सम्पत्तिसिद्धात्यथाप्याहुः सर्वं मेवेद मह: पुरा मानसं बभूव तदतिशुर्विति वाचं समापादयाञ्चक्रुरेकस्तोत्रं चित्तं धर्मं मनु प्रभुवन्त्स्यास्यतीत्यथापि वागुक्त महः संयुक्त महः संयुक्ते वाङ्मनसे भवत इति न दशमस्येत्यपर मुपरिष्टात् पत्नीसंयाजानां भवति यन्नून दशमस्याभविष्यत् पुरस्तात्पत्नीसंयाजाना मभविष्यदित्यथाप्यत्र त्रिक स्तोमः कथं त्रयस्त्रिंशं कृत्वा समाने ऽहनि त्रिकं पर्यवयिष्यदित्यथाप्यत्र गायत्रं छन्दः कथं त्रयस्त्रिं-

* "नैव दशमेनाह्ना"—इति ग।

गदत्तराः क्षात्वा समाने ऽहनि गायत्रं पर्यवयिष्य-
दित्ययापि त्वागुक्त महरन्या वाग्भवत्वन्यस्तनो नाम
भूयाद्दशमेनाह्ना सम्बन्धो यथा प्रथमेनेति कापटवः
सर्वं वैतद् दशरात्रस्य सर्वो वैतस्य दशरात्र इति
शाण्डिल्यायन आयामवाचं दशकम मनोऽप्याम-
वामसंयुक्ते वाङ्मनसे भवत इति ॥ ८ ॥

तत्र गायत्रीः करोति स्थानं गायत्रीणां यदि
परस्ताह्नो गुर्ववेदए स्तोत्रं तत्र लघिष्ठं छन्दो चिकी-
र्षीताद्यापेत्रवमाद्यवसानसमाधिः प्रतिष्ठार्थों वाव
गायत्रीः करोतीति तासु विवदन्त ऐन्द्र्यः प्राजा-
पत्याः सार्पराज्ञ्यश्चान्द्रमस्यः सौर्यं इति शाकपूणि-
स्तथा धानञ्जय्यः प्रत्यय आदित्यः प्रत्ययो मनः
प्रत्यये प्रत्ययं तत्र गायत्रं करोति स्थानं गायत्रस्य
यदि परस्ताह्नो गुर्ववेदए स्तोत्रं तत्र लघिष्ठए सामा-
चिकीर्षेद्यापेत्रवमाद्यवसानसमाधिप्रतिष्ठार्थो वाव
गायत्रं करोतीति यज्ञायज्ञीय-गौरीविति-रथन्तर-
वामदेव्यान्येवंयुक्तानि सामव्यूह इत्याचक्षत ऽथै-
तस्मिन् ब्रह्मोद्ये वदति भूयांसीव ह स्म शाण्डिल्यः
प्रदिशति यद्दादोऽब्रवन्निरात्रे ब्रह्मोद्यं तदाप्रत्ययिष्य-
द्यथा वैतद् ब्राह्मणा अधिमन्त्रए समुदाहरन्तीति

वरण मन्त्र भवत्यन्तनिर्वचना आशिष इति वृत्वा वरानौदुम्बरीं समभिपद्यन्ते सर्वकृतिं कृत्वा निस्तरिता इव मन्यन्ते ऽत आत्मान मूर्जा प्रत्याप्याययन्तो मन्यन्त ऊर्गुदुम्बर इति समाप्ते छन्दोव्यूहे सामव्यूहं कुरुत इति गौतमो ऽकृतकारार्थस्त्रयस्त्रिंश मग्निष्टोमसाम करोत्युपवदिता छन्दोमानां नावसाने ऽचिकीर्षेदथापि शिथिलोक्ताः सतिष्टोक्तश्च त्रयस्त्रिंशस्त मवसाने ऽचिकीर्षेदथापि त्रयस्त्रिंशे क्रियमाणे विक्री सापराह्णे त्रिंशतः स्तोत्रीयं दशम महः सम्पद्यते सा विराडथापेरवं द्वादश पञ्चविंशानहः सम्पद्यते नाहीनं साक्षादक्षार्यं सम्पदा चिरेन सुपाससामीत्येतदयं शाण्डिलम् ॥ ८ ॥

पञ्चदशस्तोत्राज्ज्योतिष्टोमात्षोडशिकां समन्विकां रात्रिं ब्रूहीति चतुर्विंशति माध्येन्द्य आदत्ते द्वे वामदेव्याच्चतस्रः साकमश्वास्ते दश गायत्रास्तृचास्तान् रात्रे स्थाने निदध्याच्चतस्रः ककुभः सौभरासासां द्वितीयायास्तृतीयायाश्चतुरक्षरं चतुरक्षर मुद्धृत्य द्वे प्रथमाया मुपदध्या देवं स विराट्प्रथमो गायत्राक्षरो वैतहव्य स्तोत्रीयो ऽतिशिष्टानीतरस्यां ककुब्ध्युपदध्यात्ताः षोडशिनः स्थाने निदध्याच्च-

तसो नार्मेधान्तिसन्धोष्णिह `एका चानुष्टुभं ताए षोडशिनः स्थाने निदध्यादिति शिष्टास्तिस्रः कौत्सस्य द्वे बृहत्यौ नौधसात्तथा कालेयात्तासा मेका षोड-शिनः स्थाने निदध्यादाताः सर्वास्त्रतुस्त्रिएशदक्षराः सम्पद्यन्ते ऽन्तस्थान् प्रतिशिष्टास्तिस्रः सन्धेः स्थाने निदध्याद् द्वे ककुभौ रथन्तराथतस्रो यज्ञायज्ञीया-स्तासां द्वे द्वे सन्धिस्तोत्रीयेषूपदध्यादेव मेताए सषोडशिकाए ससन्धिकाए रात्रिं निर्म्मिमीते ॥१०॥

.ततः पृष्ठं ब्रूहीति सवनेभ्यः पूर्वस्त्राहः षोडशिन-श्चतुर्थए रात्रेः पञ्चमए सन्धेः षष्ठं पृष्ठ्याश्छन्दोमानं ब्रूहीति त्रिवृत्पञ्चदशयोः समासश्चतुर्विएशस्तत् सप्तमए सप्तदशत्रिणवयोश्चतुश्चत्वारिएशस्तदष्टम मेकविएशत्रयस्त्रिएशाभ्यां नवमदशमे सोऽष्टाचत्वा-रिएशं नवमे निधाय पञ्चदशपट्कानादत्ते सर्वए षोडशिनं ते सप्तत्रिएशत्तृचास्तेषां चतुर्विएशति मादाय दशमस्याह्नोऽष्टावष्टौ पवमानस्थानेषु निद-ध्याच्चतुर आज्येषु तथा पृष्ठेष्वेक मग्निष्टोमसाम्नः स्थाने तथा सार्पराज्ञे त्रयस्तृचा अतिशिष्यन्ते तान् प्रथमस्याह्न उक्थस्तोत्रीयान् ब्रुवीतैवं तदुक्थ्यादु-क्थ्य मभि संक्रामति त्रिवृतः पञ्चदश मेतां महावृची

सम्पद्दित्याचक्षत आचार्या दशरात्रो महावृक्षस्तस्य ह्यग्रं गत्वा स्वर्गगमन मुपपद्यत इति नैषा सर्वस्मिन् दशरात्र उपपद्यत इत्यौपमन्यवस्तयस्तृचा अति शिष्यन्ते तान्यो ऽग्निष्टोमसꣳस्थ उक्थ स्तोत्रीयान् कुर्वीतापरूप तच्छन्दोमेष्वेवैषा सम्पत्सिध्यतीति तदप्येव मेव ब्राह्मणं भवति एत ऐन्द्रोऽत इति होवाचाभिप्रतारी काक्षसेनिर्यं महावक्षस्याग्रं गच्छन्ति क्व ते ततो भवन्तीति षडहं महावृक्ष मवोच-त्तस्य ह्यग्रं गत्वा त्रिवृत्पञ्चदशयोः पक्षयोः क्रियां दर्शयति तदप्येव मिव ब्राह्मणं भवति त्रिवृत्पञ्च-दशावेव स्तोमौ पक्षौ कृत्वा स्वर्गं लोकं प्रयन्तीति तयोः समासश्चतुर्विꣳशस्तस्याष्टाचत्वारिꣳशो द्वाद-शातिशिष्यन्ते ऽष्टमात्तथा दशमात्स चतुर्विꣳशो य एते सम्पदौ विदुस्ते पक्षिणो ये न विदुस्ते पक्षास्त-दप्येव मिव ब्राह्मणं भवति ये वै विद्वाꣳसस्ते पक्षिणो येऽविद्वाꣳसस्ते पक्षा इति ॥ ११ ॥

अथातो गवामयनं तदेक एकेनाह्नाभिविदधते ज्योतिष्टोमेनाथैके ऽतिरात्र-चतुर्विꣳश-नवाहव्रता-तिरात्र इति कृत्वा ज्योतिष्टोमेनैव सꣳस्तृणन्त्यथैके गोआयुषी दशरात्र मित्युपाहरन्त्येतत् संवत्सर-

प्रवर्ह इत्याचक्षते शङ्खाहत मिति चैतस्या सपूर्णी वार्कखण्ड आसाञ्चक्रे नानाहोभिर्वयं कल्पयामो यथैतद् ब्राह्मण मथ खलु य ऊर्द्ध ज्योतिष्टोमदशा-हाभ्यां यज्ञक्रतवः सप्तभिः पर्य्यायैस्तेषु ज्योतिष्टो-मानां च दाशरात्रिकाणाञ्च द्रव्याणा मागमो भवति स्तोमान्वितानि स्थानान्वितानि पृष्ठान्वितानि तन्त्रा-न्वितानि भागान्वितानि सर्वस्वान्वितान्याशीःस-प्रायाणीतिरूपाच्छान्दसान्यायन्त्यपि च व्यावृत्त्यर्थानि तत्रेह चतुर्विंशे यानि सप्तमात्स्तोमान्वितानि तानि यानि द्वितीयात्स्थानान्वितानि तानि यानि ज्योति-ष्टोमात् पृष्ठान्वितानि तानि यानि दशरात्रात् सर्वाणि रूपाणि क्रियन्त इति ,तानि यानि छान्द-सान्यभिवन्ति प्रवन्ति स्वस्त्ययनप्रवादान्युपक्रमे ऽभि-रूपाणीति तानि तत् खलु बृहत्पृष्ठं रथन्तरं मध्य-न्दिनं कुर्म उपक्रमणीय महरिति रथन्तरं द्वितीय मिति बृहद्वेके चोभयसामान इति ह स्माह गाण्डिल्यायनो बृहत्पृष्ठास्ते रथन्तरमध्यन्दिनाः कुशलेनैवं स्वे सवने स्वे छन्दसुभे वामदेव्योत्तरे भवत इति चतुर्थं च होतुराज्यं समामना-मस्तासां चतुर्थी मुद्दरत्युतीभवत्यपरूपा प्रायणार्थे

स्याध्येतस्मात् रथन्तरप्रवादो भवत्यपरूपा स्वस्त्ययनार्थे-
ऽथ यचैतत्सर्वस्मारे भवत्येतां तत्र करोत्यथ खलु पूर्व
मन्वहं ब्राह्मणात् सन्तं नान्वहं कुर्म एवञ्च रहस्य-
ब्राह्मणे दर्शयत्यपि च शश्वद् ब्राह्मण मधीयते ते वा
एते पूर्वातिपूर्वा ये पूर्व मन्वह मुपयन्तीति ॥ १२ ॥

उद्धरन्त्याचार्यास्त्रैककुभम् समानोदर्कयोन्यपरूपं
प्रायणार्थं तचैतत्स्रौभरं पृष्ठान्वितं विकल्पो वाचनात्
ब्राह्मणचोदितत्वादथ खल्वाह सर्वाणि रूपाणि
क्रियन्त इति तत्र खल्वाचार्या एतेष्वेव द्रव्येषु
सर्वांस्तोमान्सर्वाणि पृष्ठानि सर्वा विभक्तीर्दश-
रात्ररूपाणीति भक्तिमात्रेणैव कल्पयन्ते त्रिवृत्-
पञ्चदशौ चतुर्विंशम् सम्पद्यते पञ्चदशसप्तदशान्
पञ्चैकविंशान् षडेव त्रिणवान् षड् त्रयस्त्रिंशा-
न्सर्वाणि पृष्ठानि वृहद्रथन्तराभ्या मुपाप्नान्येतत्
परोक्षाणि इतराणि वामदेव्येन वै तस्मादित्युष्टान्यु-
दग्रीयेन वै तद्धि सर्वेषाम् रूप मित्यनिरुक्तायां
निरुक्तं विभक्त-सर्वाभिप्रायं वामदेव्येन स्वरविभक्तिः
पृथग् दाशरात्रिकेभ्यो द्रव्यागमम् सम्पद्येदुपवती
प्रथमादग्निवती द्वितीयाद्विद्युतवती तृतीयात्सत्या-
साढीयम् सस्तोवीयं चतुर्थाद खलु साकमश्व

मुक्थप्रणये ऽकरिष्यदतिरात्रे तत् कृतं भवति तन्न समविचारयिषीत् तत्रैतत्साचासाहीयं चाद्योपक्रमादुपक्रमेद् वार्हताद् वार्हते सौढवतीषु सौढवन्नामो ऽथेदं कर्म सहेमहीति पार्थपञ्चमा दुदृष्ट्शीयए पञ्चाद्यङ्गा उद्दृष्ट्शीयं तदुदृष्ट्शपुत्र इति हि भवतीत्युद्दृष्ट्शीयेनैव सर्वरूपावाप्ति मेके वहुसप्तमादिन्द्रे अग्ना नमो वृहदित्यष्टमात् समं तद्वैर्धश्रवसे नवमादभीवर्त्तः सत्तौत्रीयो दशमात्॥ १३॥

॥ इति निदानसूत्रे चतुर्थः प्रपाठकः ॥

---

## ॥ अथ पञ्चमः प्रपाठकः ॥

अथैपोऽभिप्लवस्तस्मिन्त्सारण्ये गेयं छन्दःकृत्नं वभूवेति शाण्डिल्यो ऽर्द्ध मेव प्राग् विषुवतो ऽर्द्ध मूर्ध्वं दसादित्यव्रतानि शुक्रियाणि विषुवति स तवश्रावीयानि सामानि व्रत इति उमूहति वार्हद्रथन्तरपृष्ठादनित्याभिरनित्योऽयए पडह इत्यपाडकिकीरनित्या इत्याचक्षते ते खलु शम्वद्यात्वविन: स्तोत्री-

यात् प्रतिपदः कुर्वन्ति यथास्थान मेवानुरूपाननु-रूपान् वयं प्रतिपदः कुर्मः सौत्रीयाननुरूपानेवं यथोत्तरए सौचीयानुरूपाणां प्रत्याहारो भवतीति पडह्वशेन नाना प्रतिपदः समान पर्यास मेकाह-वशेन तेन प्रच्युतं द्वितीयपर्यासं प्रथमेऽहन्यनु-गृह्णात्यथेतान्येव वै यूथिकान्याज्यान्युद्धृत्य गाय त्राणि तदभिक्रौनि प्रतिनिदधाति त्रीणि त्रिणिध-नानि करोति त्रीणि त्रीणि ह्येव पडहे ऽवधारित-त्रिणिधनानि भवन्ति तानि यत्र यथाकृत मच्छख-त्यायास्य मायथित्तिसाम पष्ठेऽहनि चिकीर्षन् पार्थं द्वितीयस्य माध्यन्दिनात्व्यं करोत्येतत् पुरस्तात्स्तोभं चन्द्रसाम वृहति पष्ठे ऽभिरूप तेन प्रच्युत मिह-वद्वासिष्ठए पष्ठे ऽहन्यनुगृह्णाति स्वरविभक्तेरनु-ग्रहाय ॥ १ ॥

अथैते त्वाष्ट्रीसाम चाम्भीगवं च तृतीयचतुर्थयो-रह्नोर्व्यतिहरति चाहयोर्व्यतिपङ्गाय तत्र ता एव देवताविभक्तयो ऽथ सामान्तविभक्तय एतेषा मेव द्रव्याणां तल्लिङ्गाः कल्पयेत पञ्चमे तु निधनविभ-क्तिर्न विद्यते पष्ठे चेडाविभक्तिमत्राभ्यावारयन्ति वाईह्निरं वानुकल्पयेत् सौश्रवसं वा उक्थाना

ब्रह्मसाम कुर्याद्गौष्ठं षष्ठे नु कल्पयेदिति तच त्रिकद्रुका स्तोमाः षाडहिकानि तन्त्राण्यस्ति च षडहप्रवादोऽपि चैवं रहस्यब्राह्मणे दर्शयति ज्योतिष्प्रायणो ज्योतिरुदयनः षडहो ऽभिप्लव इति चैतरेयिणां तां सुमदेवं प्रयुक्त एवं ज्योतिष्प्रायणो ज्योतिरुदयनः षडहो भवति यथास्थान मितरदिति तत्र यान्यैकाहिकानि द्रव्याणि स्तोमान्वितानि तानि यानि षाडहिकानि तन्त्रान्वितानि तानि यानि छन्दोमिकानि त्र्यग्रान्तानि चयस्ते त्रय इमे लोकसम्मास्त लोकसम्मा स्त इमे वृहद्रथन्तरपृष्ठास्ते वृहद्रथन्तरपृष्ठा इमा इति रुपा छान्दस्यान्यायन्त्यपि च व्यावृत्त्यर्थानि स्वादिष्ठां प्रथमस्याङ्ग आर्भवीयां करोति या ह्येतस्याङ्ग आर्भवीया भवति न तस्या उत्तरे अधीमहे तस्याः शश्वन्मापशरावय उत्तरे अधीयते तां ते कुर्वन्त्याभीशवं चतुर्थे नावमिकं कुर्यादिति धानञ्जय्यो व्यावृत्त्यर्थं पृष्ठ्याभिप्लवयोश्चातुर्थिक मेवेति गौतम एवैतस्याङ्गः स्वरविभक्तिर्भवतीति भवतीति ॥ २ ॥

अभीवर्तो ब्रह्मसामेति तस्य स्तोत्रीयविधिर्यदितः समानं साम भवत्यन्योन्यः प्रगाथ इत्यस्य नानात्वं

य आस्तुतं कुर्वते यथा दुग्धा मुपसीदे देवं तदिति प्रयुक्तप्रतिषेधस्तस्यान्ववायः पञ्चसु मासु वार्हताः आप्यन्त इत्यधातः प्रगाथायतानि चतुःशत मैन्द्रा-वार्हताः प्रगाथा दशतयीषु तान्त्समामनेत्तेषां चत्वा-रोऽन्यचस्थाना वृहद्रथन्तरकालेयस्तोचीया अहरहः शस्यन्त इन्द्रक्रतुरौत्तरपञ्चिकः शत मतिशिष्यते तेषा मेकं चतुर्विंशे कुर्यान्नूनं शत मतिशिष्यते सप्ता-शीतिः सतोवृहत्यस्त एकेन न चिंशत्सातोवार्हता-स्तृचास्तेषा मिहैकविंशति माहरति तद्विंशति-शतं सम्पद्यते विंशतिशतं पञ्चानां मासाना माभि प्लविकान्यहानि भवन्ति तेष्वेतान् प्रगाथान् प्रयुञ्जीत तृतीयेऽहनि सतोवृहतीः कुर्वन् य एष पञ्चमस्य मासस्योत्तमोऽभिप्लवस्तस्मिन् द्वे सतोवृहतीः कुर्यात् तृतीयपञ्चमयो रङ्गोर्न हि प्रगाथा अनुभवन्तीति तत ऊर्द्ध्वं छन्दसी संयुज्याद्दौष्णिहे तृच एकां गायत्रीं मुपदध्यारसतोवृहत्यतिशेषं समाप्येति गौतमोऽष्टौ सातोवार्हतास्तृचा अतिशिष्यन्ते तान् प्रथमे चाभि-प्लवे कृत्वा द्वितीयस्य द्वाहे तत ऊर्द्ध्वं छन्दसी संयुज्या-दिति चतुरुत्तरैरेव छन्दोभिरेतव्य मिति गायत्रीं चतुर्विंशे ऽभीवर्त्तं कुर्यादुष्णिहि प्रथम आभिप्लविके

ऽनुष्टुभि द्वितीये तत ऊर्द्ध्वं बृहत्या पञ्चमास इत्वा य
एष पञ्चमस्य मासस्योत्तमोऽभिप्लवस्तस्य पञ्चमे ऽहनि
पङ्क्तीः कुर्यादपि वा षष्ठे तत ऊर्द्ध्वं त्रिष्टुब्भ्युत्तमे स्वर
साम्नि जगत्या मित्यत्रापि सातोबृहत्यतिशेषण् समा
प्येत्येवं गौतमो नव सातोवार्हतास्तृचा अतिशिष्यन्ते
द्वौ च प्रगाथौ तान्प्रथमे चाभिप्लवे कृत्वा द्वितीयस्य
च पञ्चाहे पङ्क्तीः षष्ठे तत ऊर्द्ध्वं त्रिष्टुब्भ्युत्तमे स्वर-
साम्नि जगत्या मिति ॥ ३ ॥

छन्दःसंयोगरूपोऽस्य विधिस्तत्स्थाने चानुवृत्तर्थं
मासशब्दवैयर्थ्य मिति चेत् पञ्चसु मास्स्विति यथा
पृष्ठ्यायनोऽपवादस्तु लिङ्गेन दद्राणवतीवन्न च सामा-
न्तरये तत् कर्मास्तीत्येकदेशे यथा कालकृतौ लोके
कृत मिति बृहत्या चैव त्रिष्टुभा चैतव्य मिति
त्रिष्टुभि चतुर्विंशे ऽभीवर्त्त कुर्याद् बृहत्यां प्रथम
आभिप्लविकेऽपि च बृहत्या मेव चतुर्विंशे बृहत्यां प्रथम
आभिप्लविके त्रिष्टुभि द्वितीय एव मनुपूर्वं छन्दसोः
प्रयोगो भवतीति तत ऊर्द्ध्वं व्यत्ययेद् बृहताचय एव
तन्मन्य इति शौचिवृक्षिर्बृहत्या पञ्चमास इत्वा य
एते ऽष्टौ सातोवार्हतास्तृच अतिशिष्यन्ते ये चैते
त्रयोऽन्यचस्थाना बृहद्रथन्तरकालेयस्तोत्रीयास्तैः षष्ठे

मासि चैष्टुभो व्यत्येयद्रह: कालेयस्तोत्रीये ऽभी-
वर्त्तं कुर्यात् तद्गिरिरिसधासतीति कालेय मा-
सन्नाराद् यद्हो रथन्तरस्य बृहत्स्तोत्रीये रथन्तरं
स्वादपि वा स्वरसाम्नोरन्यतरस्मिन् रथन्तरस्तोत्रीयं
कुर्यादच च्छन्नासु रथन्तरं भवतीत्यथ त्रयस्त्रिंशत्
प्रगाथ मेकं चतुर्विंशे कुर्यात् सातोत्राईत त्रय-
स्त्रिंशायने ऽभिप्रयुञ्जीता ऽपि वा न सतोवृहती-
राद्रियेत य एव चतुर्विंशे त मनुसंहरेदिति ॥ ४ ॥

एतेनैवोत्तराणि द्व्याणि व्याख्यातान्या द्विप्र-
गायाद्यथाकारो पुरस्तात् प्रगाथान्स्वात्तथोपरिष्टा-
दिन्द्रक्रतौ सामानि प्रतिकल्पयेत् तावन्ति तच्छन्द-
सानि निधनवन्ति यदि तच्छन्दसानि न विद्ये-
रन्नपि छन्दसानि कुर्याद्यान्यभिरूपाणि स्युरीति-
तश्च निधनतश्च कतम एषां कल्प इति प्रथमौ
प्रतिपिद्याविव्याङ्क्रयेतरे सर्वे कल्पा अपि वा द्विप्र-
गाथ मेव कल्पः स्याद्योपदर्शी नून पूर्वानत्यक्रमी-
दिति ते कस्य हेतोः पट्प्रगाथ मयनं समारम्भा-
न्तीति नैदं पट्प्रगाथ मिति शाण्डिल्यायनो यः
पट्प्रगाथं चिकीर्षेन्न सतोवृहतीराद्रियेतापि य एव
चतुर्विंशे त मनुसंहरेदिति स खल्वय मभीवर्त्तः

षटप्रगाथानधितिष्ठति पूर्वेष्वान् पचसिद्धेश्च सतो-
बृहतीरेव मैवेन्द्रक्रतुरुत्तरे पञ्च प्रगाथिकानि हे
सतोबार्हते विकर्ण मष्टम मेव मनयोः समाधि-
रित्यथैतत्सुन्नान मौष्णिह मा विषुवतः सर्वत्र
पृष्ठ्यपञ्चाहवर्ज मतिरात्राच्छायथाकामकल्प्यरवाहे-
तेषा मन्नां तद्दभिप्लवस्य रायन्तरेष्वहस्सुर्विचार्यते
पृष्ठे चैव मिव षडहे नाना स्वर्णिधनानि भविष्य-
न्तीति पृष्ठ्य मेव छिन्दन् व्यूहेत् समूहेदिति व्यूढः
स्यादिति शाण्डिल्यायन एव मस्यपिदर्शनं भव-
त्यथापीदं पुराण माचार्यवच इति समूढः स्यादिति
धानञ्जय्य एष न्याय एवञ् हि ज्योतिष्टोम एवं दश-
रात्रस्य प्रथमस्त्र्यह एवं दशम मेव महानैकाहा
इत्यथापि समूढ एव पूर्वं उत्पन्नो ऽपरो व्यूढ एवं
च रहस्यब्राह्मणे दर्शयत्येव मिव ब्राह्मणं भवति
छन्दांऽसि वा अन्योन्यस्य लोक मभ्यध्यायन्नित्युत्पन्नस्य
लोको नाम भवति ॥ ५ ॥

अथापि विलुप्तो व्यूढः षडहेन हि त्रिष्टुभः
प्रतिपन्नां लभते न जगत्यो माध्यन्दिनान्तान्न गायत्र्या
आर्भवान्तान् यद्येवं खल्वेतच्छन्दांऽसि विप्रच्युत्य
दशमे ऽहनि सम्प्रकाल्पन्ते तत एव व्यूहः सिध्यतीति

तदपैरवं मिव ब्राह्मणं भवति नर्त्ते छन्दोभिभ्यः पृष्ठो
वृह मानश इत्यथापि समूढेन 'षडहेन सम्प्रयुक्तो
भवतीति तस्यैके प्लवद् वहिष्पवमानं कुर्वन्ति न
त्वेता वृहत्कारिता इति नवाहयोगा इमा भवन्तीति
धानञ्जय्यः कथ मसमापयिष्यन्नवाहं नवाहयोगाः
कुर्यादिति तत्र निल्या वुपपन्नौ कविमानभिप्लवन्या-
येन पार्थं द्वितीयस्य माध्यन्दिनान्त्य मभिप्लवन्यायेन
निल्याभिः समूहति निल्योऽयं षडह इति तत्र
तान्येव सामूहिकानि यान्यभिप्लवे जनिवाथ्यंव मेवै-
तदन्यत्तदेतत्स्वयोनिकामः कारयतीति कथं पृष्ठे
ऽभीवर्त्त इत्यकर्त्तव्य इति शौचिवृचिः पञ्चसु मास्सु
बार्हताः प्रगाथा आप्यन्त इत्येते पृष्ठादैवैपाभिः
सिध्यतीति कर्त्तव्य इति गौतमो यत्सामावस्त्रजेयुरव
स्वर्गाल्लोकात्पद्येरन्निति हि भवतीति पृष्ठ्या वा अथैतत्
सतोऽवाद्यैन्न त्वेनं के च नाभिप्लवात्त्रावयन्तीति तं
खलु वृहतोपु कालेयद्वितीय मनुकल्पयामः सन्तान-
रूप मस्मिन् भवतीति कथ मभिजितोत्यकर्त्तव्य
इति शौचिवृचिः कर्त्तव्य इत्येव गौतमस्तत्पृष्ठेनैव
व्याख्यात मथाप्येष एवं क्लृप्त एवैकाह आगच्छत्यभी-
वर्त्तमध्यन्दिन इत्यभीवर्त्तमध्यन्दिन इति ॥ ६ ॥

अथैते स्वरसामानस्तानग्निष्टोमानाह नवाह-
कारिणः कुर्युरुक्थ्यानेकविंशत्यहकारिणो योऽन्यथा
कुर्यादकुशलः पुरुष इति विद्याद्येषां पृष्ठन्तोत्रीया
आनुष्टुभा एकबृहतीका अनुष्टुभौ पूर्वे राथन्तरयो-
र्बृहत्युत्तमेत्येतदेव विपरीतं द्वितीये चतुर्ऋचं तृतीयस्य
भवति तासां तृतीया मुद्धृत्य चतुर्थीं तृतीयां कुर्म
एषा बृहती भवतीत्यथ यत्रासु षोडशिसाम भवति
सर्वास्त्वानुष्टुभो भवन्ति यत्र खलु बृहद्रथन्तरे ते
करोति स्वराणा मेव पृष्ठत्वे तिष्ठमानो ऽथ स्वराण्या-
नुष्टुभान्यनुष्टुप्स्विति तच यान्यैकाहिकानि द्व्याणि
पृष्ठान्वितानि तानि यानि षाडहिकानि तन्वान्वि-
तानि तानि यानि छन्दोमिकान्यभिप्लव एव तानि
व्याख्यातानि चुम्नकवैष्टम्भं प्रथमे ऽहनि करोति
दिगनुयहायादित्त मच स्वरं भवति तेन प्रच्युतं
हि तं तृतीये ऽहन्यनुगृह्णाति पयसोः सन्तानाय
विकल्पयन्त्य ऽनुष्टुभो मध्ये निधनान्यैडान्यनुजिघृ-
क्षन्तः स खलु विकल्पयंस्स्वाराण्यन्त्यानि कुर्याद-
विकल्पयन्नैडानि विकल्पयन्तस्योत हैके विकल्प-
यन्तस्यैडान्येव कुर्वन्ति तृतीयसवनस्याचेण विक
ल्पयंस्त्वेवस्वाराण्यन्त्यानि कुर्यादविकल्पयन्नैडानि

वसिष्ठस्य प्रियं चतुर्थाध्यायान्तर्यात् प्रत्याहरति तेरश्चां वेति विचारयन्नस्युद्दएशीयवाध मिहानुग्रहणाव्यामहीयवं द्वितीयात् प्रच्युतं तृतीये ऽहन्यनुग्रहणात्यत्र स्वयोनि भवतीति ॥ ७ ॥

अथैष विषुवाएमत्र खलु बृहद्रथन्तरे करोति शुक्रियाणा मेव पृष्ठत्वे तिष्ठमानो ऽथापि स्वर्गाक्षौ विषुवाए स्तत्र स्वर्गाक्षि बृहद्रथन्तरे अचिकोर्षीत्ते यत्यवमानयोर्निदधात्येतदेनयोरपयतोः स्थानं भवति ते गद् बृहत्यां चानुष्टुभि चैतौ नैदिष्ठिनौ चातुष्पदावावापा विति तत्र खलु गोत्रान्तं करोत्येतदन्ततन्ततर मन्तं विधेयं भवति मध्यधरस्तत्र यान्यन्तलक्षणानि ( मध्यलक्षणान्य- * ) ज्योतिर्विधानि शान्तिविधानि शुक्रियसदृशान्यभिरूपाणि तान्यथ खल्वत्रानुष्टुभः प्रतिपदः करोति यथैतद् ब्राह्मणा मुपवर्तीं वयं परमे ऽहनि परमां प्रतिपदं कुर्मो यान्यन्यानि बृहद्रथन्तराभ्यां पृष्ठानीति ह स्माह शाण्डिल्यायन उपवल्येव तेषां कुशलेनोपेत्येत्र तानि बृहद्रथन्तरे इत्यथापरात्मोक्तौ विषुवाएमं प्राणोक्तया गायत्र्या प्रत्यपित्योद्दान्तो ऽनाद्दान्त मिति वा वार्तिनावारिवति माध-

* 'क पुस्तके लेखोऽयं नैव विद्यते।

शरावयोऽग्निरिन्द्राय पवत इति शुद्राशुख्या उत्तरे उपवतो चाग्नियवतो च तत्रैके नाभीवर्त्तं कुर्वन्ति पौर्वपक्षिकोऽयं भवत्यथाप्येवं सुज्ञानेन समाधिरिति मध्यन्दिने वयं कुर्म एव मित्र ब्राह्मणं भवति तादुभौ विषुवति कार्याविति यद्येतत्सुज्ञानेन समाधिरित्यार्भवतरं तद्भवति नो पूर्वपक्षिक मूर्द्धं पृष्ठाद्चिकीर्षीत् ॥ ८ ॥

अथ खल्वाह त्रिष्टुब् जगतीषु भवतीति कस्येदं ब्राह्मणं स्यादिति पृष्ठाग्निष्टोमसाम्नोरित्याहुरेते कल्पाख्याते भवत इत्यथाप्याहुस्त्रिष्टुभ एवेमा जगत्तद्वृत्तयो भवन्तीत्यथापराहुस्त्रैष्टुभजागताद्देवेमाः सूक्ताद्धृता भवन्तीत्यथाप्याहुर्जागत मेवाचैकं पदं भवतीत्यपि वा सम्पद एव ब्राह्मणं स्यादपि वा योनिवादश्च कर्मवादश्च स्याज्जागतं हि सत् त्रिष्टुप्सु क्रियत इति समसितश्चास्त्रिष्टुब्जगतीर्मन्य इति कौत्सस्त्रिष्टुब्जगतीषु भवतीति सति किं मन्यत् समासादित्यावृत्ते पृष्ठे ऽभीवर्त्तलोके सामानि प्रतिकल्पयेदिति गौतम एवं च पञ्चसोः समाधिरपि चेवं स मा मेन्द्रक्रतुरनुवघ्नत इति तत्रैतेषा मेव चत्वारि यान्यभिप्लवे वासिष्ठा गौङ्गवे च द्वितीयप्रथम-

योरह्नोः शुद्धाशुद्धीयं चेति विचारयन्ति शाण्डिल्य एतदक्षरणिधनं भवतीति नाद्रियेतेति शौचिवृक्षि-स्तद्भीवर्त्तेनैव व्याख्यात मथापि नित्यान्येवाभिरूप-तराणीतीन्द्रक्रतु मस्तूयमान मनुशᳪसयन्त्सामानि प्रतिकल्पयेदिति गौतमो जनित्रं विश्वजिति यानि पृष्ठा ऽभीवर्त्तलोके तानि दाशरात्रिके पृष्ठ्ये तेषां चत्वारि छन्दोमेषु यथाभागं यथापृष्ठं वा पौरुमीढं व्रतेन ज्ञात्रेण श्येतं वा तन्त्वज्ञात्रेणैवं वा खलु कुर्यान्न त्वाद्रियेतासा मा न मिन्द्र क्रतु मनुशᳪसयितु मिति ॥ ८ ॥

अथोप दशरात्रᳪ सम्भरतां पूर्वे पक्षसि विचारो भवत्यतिरात्रचतुर्विᳪशे त्रीनभिप्लवान् पृष्ठ्य मिति कृत्वा पञ्चायनमासानुपेयुरभिजित् स्वरसाम्नो न त्रिᳪशत्तमा मुपसम्भरन्त्यथैतं दशरात्र मेक आवर्त्त-यन्त्यावृत्तिसाधूत्तरं पक्ष इति न वय मावर्त्तयामो ऽनुपेतं पूर्वे पक्षसि तं कस्मादावर्त्तयामेत्यथापि नियुक्त-मानसो भवति यद्यु हैन मृते मानसादावर्त्तयिष्यद्दशमं च मानसं चरद व्यवयिष्यद्यद्यु वै स मानसं व्रतं च मानसञ्च व्यवयिष्यदपि चाह्नातेन दशरात्रेण मानस मध्यशाययिष्यत्स कथ हैतोरह्नतेन व्रतेन मानस

मधि गाययतीति वृतसाम्वम्थाम्राजापत्यं व्रतं प्राजापत्यं मनः सर्वाग्निवृतए सर्वाग्निमनक्तदपि शश्वत् सांवर्गजिता गोतमा उपरिष्टाद्वृतस्य मानस मधीयते प्राकृते न वृतेन मानस मधिशेषयामेति सामान्यात्तु वय मनधिशाययन्तो मन्यामहे ऽथैतान्यधिपयन्त्यहानीत्याचक्षते विरात्र वतुर्विंशे नवाहद्वोश्चायुषी दशरात्रं वृतातिरात्रे अनयगाद्नपक्रमगाद्दित्यनपक्रमगाद्देति ॥ १० ॥

अथातः संवत्सरा वर्गाणां पञ्च संवत्सरा वर्गास्तेषु धीरो मनीषया कर्मण उपसदो विद्यात्सएस्था वैषु वृतानि च पट्त्रिंशोनो नवोनश्च षडहोनो ऽथ सावनो ऽथाष्टादशभिर्ज्यायानहोभिः सावनात्परो नक्षत्र मिद मासस्य तस्य चैव त्रयोदशी चान्द्रमसः सावनस्त्रोभावथाष्टादश्युत्तमो ऽष्टासप्तचिएशतं पौर्णमास्यां प्रसाधयेत् गवामयनस्योपायएश्चतुरः प्रतिपादयेत् तेषां नक्षत्रः प्रथमस्तस्य सप्तविएशिनो मासाः सप्तविएशतिर्नक्षत्राणीति तस्य कल्पः प्रथमस्य प्रथमस्याभिप्लवस्य स्थाने त्रिकद्रुकत्र्यह कुर्यात्माग्विषुवत उत्तमस्योत्तमस्योर्द्ध विषुवतस्ते खल्वभिप्लवतन्त्र एव कृप्ताः स्युरित्येक एते चेहाधिकृता न चापि निव-

त्तंयत्यथापि दृश्यते त्राहस्त्राहतञ्चे क्रमो यथा स्वर-
सामानस्त्रिकद्रुकपञ्चाहञ्चाभिप्लवतञ्चे सप्तदशराचे
स्वरतञ्चा इत्यपर मेवञ्च तञ्चाविलोपोऽपि च
सूत्रेषु चिकद्रुकत्राहः स्वतञ्चो भवत्यथ नवीनस्त्वेवं
त्रयोदश मासाः सम्भार्ययोर्मासयोर्नवाहं लुम्पेच्चतुरह
मेव प्राग्विषुवतः पश्चाह मूर्द्धं तस्य कल्पः प्रथ-
मस्याभिप्लवस्य स्थाने ज्योतिषं च गां च कुर्यात्प्राग्
विषुवत ऊर्द्धं विषुवत उत्तमस्याभिप्लवस्य स्थाने
ज्योतिषं नाच विषुवानभिभवत्युत्तरे ऽत्र पञ्चसि
विषुवानुपसङ्ख्यायत इत्यथ षड्नाश्चान्द्रमसाः पट्
पूर्णोपक्रमा ऊनावसानाः पूर्वे पञ्चसि मासाः खून्नो-
पक्रमाः पूर्णावसाना उत्तरे तस्य कल्पः प्रथमस्य प्रथ-
मस्याभिप्लवस्य स्थाने ऽभिप्लवपञ्चाहं कुर्यात्प्राग्विषुवत
ऊनेषु मासेषूत्तमस्योत्तमस्योर्द्धं विषुवतः ॥ ११ ॥

व्याख्यातः सावनः स एष आदित्यसंवत्सरो
नाचत्र आदित्यः खलु शश्वदेतावद्भिरहोभिर्नच-
त्राणि समवैति त्रयोदशाहं त्रयोदशाह मेकैकं
नक्षत्र मुपतिष्ठत्यहस्तृतीयं च नअधाक्तयोरहो-
राचयोर्द्वे काले चेति सांवत्सरास्तास्त्रुपञ्चागतं
कलास्ते षण्नवतवर्गाः स पट्षष्टित्रिशतः षष्टित्रिशते

श्लोकौ भवतः सप्तविंशती राष्ट्रस्य राज्ञो वसतयो मितास्त्रयोदशाह' त्रयोदशाह मेकैकं नक्षत्र मुप- तिष्ठति त्रयोदशाहानि तृतीय मङ्कश्च तस्त्रेधा दश- तयो विकुर्वंश्च त्रिणवं पन्थानं विततं पुराणं चत्वा- रिंशता नवरात्रैः समश्नुत इत्यथाष्टादशभिर्ज्योत्या- नादित्यसंवत्सर एव तैर्यगयनिको भवत्यादित्यः खलु शश्वदेकादा षण्मासानुदङेति नव चाहानि तथा दक्षिणा तदप्येते श्लोका भवन्ति यस्मिन्वै परिवत्सरे सौर्यौ मासौ ऽथ चान्द्रमो नाक्षत्रो न विलुप्यते कः स्वित्तं वेद कः स्विदष्टासप्ततिःत्रिंशतं तस्मिन्संवत्सरे मिते सौर्यौ मासौ ऽथ चान्द्रमसो नाक्षत्रो न विलु- प्यते सप्तविंशति मेवैष सप्ताहानीति दक्षिणा तथोदङ् सप्तविंशति मिति तत्र कल्पः सम्भार्ययोर्मासयो- रष्टादशाहान्युपाहरेन्नवाह मेवप्राग्विषुवतो नवाह मूर्ध्वं त्रिकद्रुकाणुशाभिप्लवं च प्राग्विषुवतो ऽभिप्लवश्च त्रिकद्रुकाणुश्चावृत्तानूर्ध्वं विषुवतः ॥ १२ ॥

कथ मनाहिताग्नेः सत्रासन मिति न विद्यत इति शाण्डिल्यायनः सर्वं इष्टप्रथमयज्ञाः पृथक् सत्री पकरणानोष्ट्वा समाप्याग्नीन्त्सत्र मासित्वोदवसानी- यान्तानृत्विजो वृत्वा पृथक् पष्ठशमनीयैर्यजेरन्निति

नो विधानं यथा त्विद मद्य सचिवो भवन्त्यहीन-
याजका इमे कृष्णाजिनकण्ठा भवन्त्यथापि यः सत्रे
करणाद्यजमानो मन्येतापि नूनं सो ऽहीनेकाहेष्वपि
यजमानो मन्येत तत्र ह्यपि करोतीति यद्यु वै यज-
मानशब्दाद्यजमानो मन्येतापि नूनं ये यजामह
इतीष्टिपशुबन्धेष्वपि यजमानो मन्येत तत्र ह्यपि
करोतीत्यथाप्याह य एतेनानिष्ट्वेति तदेतदनाहि-
ताग्नौ साधिष्ठ मुप पद्यत इति विद्यात इत्यपर मेवं
च समारम्भोऽपि चैवं सूत्राणि भवन्ति स्थालीपाकैरना-
हिताग्नयो यजेरन्नित्यथापि दृश्यते पराग्निष्विज्या
यथा पुरोहिताग्निभिरश्व मनु चरन्तीति तदपि
प्रशब्द ब्राह्मणं भवति यथा परस्येनाध्यान मिया देव
मेव स्वर्गं लोक मप्येति यः पराग्निषु दीक्षित इत्य-
थापि ब्राह्मणं भवति तेषां ये पुरोडाशिनः स्युरपि
ह्यपुरोडाशिनो भवन्तीतीवार्थो भवत्येतेनानाहिता-
ग्नीनां समासन मुक्त मथापि ब्राह्मण मेव भवति
तेषां ये पुरस्तादिदीक्षाणाः स्युर्यद्यु वैषां गृहपति-
रित्यपि ह्यदिदीक्षाणा एव भवन्तीतीवार्थो भवत्येते-
नानिष्टप्रथमयज्ञानां समासन मुक्तम् ॥ १२ ॥

॥ इति निदानसूत्रे पञ्चमः प्रपाठकः ॥

## ॥ अथ षष्ठः प्रपाठकः ॥

यथापि समाहारसिद्धिं सर्वं भवति तदेतत् समरूप मन्वयस्तव द्रुत्यारिणा च मन्त्रैवेय मित्यथ यदै-तच्छाण्डिल्यायनीयगृहपतिस्तथा विगृह्णीते ऽथ कः पृष्ठशमनीयः स्यादिति यथाकामी पश्यानां दक्षिणा-वता मिति वार्षगण्यो ऽनारभ्य वदति तस्मादुदवसाय दक्षिणावता यजेतेत्यथापि पृष्ठशमनीयं नाम क्रतु मधीमहे ऽथापि सारस्वतस्येष्टिरेव पृष्ठशमनीयो भवति तथा दार्षद्वतीरयोरिष्टिर्वा पशुर्वेति ज्योतिष्टोम इत्यपर मनादेशे क मन्यं प्रतीया मथाप्याह यामि-तदक्षिणेव स्यादेष एव कार्य इत्यमितदक्षिण उ खलु पृष्ठशमनीयो भवत्यथाप्येष सत्राणा माद्यन्तेषु दृष्टो भवत्यथ मु खल्वन्ततम इत्यथापीय उच्चावचान माहीनानां मन्तेषु दृष्टो भवति यथा चातुर्मास्येषु वाज पेये राजसूये सदृश-वज्र योरिति यदेतत् सारस्वं दार्षद्वतीरयोरितीष्टिमायः स भवति सुत्याप्रायं तु ज्योतिष्टोम एवाभिरूपतर इति तदपि शश्वद ब्राह्मणं भवति तस्मादुदवसाय ज्योतिष्टोमेनाग्नि-ष्टोमेन रथन्तरपृष्ठेन सहस्रदक्षिणेन पृष्ठशमनीयेन यजेतेति यजेतेति ॥ १ ॥

अथात एकाहास्तेषां यानि ज्योतिष्टोमानि द्रव्याणि नित्यानि तानि यान्यन्यान्युक्तान्ययानि तानि बृहत्पृष्ठेष्वन्यत् तन्त्रं करोति बृहदेकाहेषु स्थानवच्चिकीर्षन्नस्य प्रत्नां माध्यन्दिनीया सेषा सं-रूपिता बृहतेति यस्तेमदा मार्भवीया सेषा बार्हता दक्ष इत्यथ यत्र सार्थिचिकीर्षा * भवति परिस्थानां तत्रार्भवीयां करोति तदाहुः परिस्थानैवैतस्य तन्त्रस्य पुनर्भवीया बभूव तां सानुवाराहिरपनिनाया-यडहमान्नो भवतीति सैषा तयोर्वाक्संहिता प्रोच्यतेऽतो यान्यन्यानि द्रव्याणि बार्हतलिङ्गानि वा तानि भवन्ति बार्हतेभ्यो बाह्येभ्यो ऽयं सोम इति माध्यन्दिनान्तीया बार्हतलिङ्गा सूर्यवत्य आर्भवा-न्तीया दशमादन्तान्विता अन्तो हि बार्हत्पृष्ठ मित्ये-तङ्गोस्तन्त्र मित्याचक्षतेऽथ यत्र ज्योतिष्टोमे तन्त्रे बृहत्पृष्ठं तद्राजयज्ञेषु वृषा शोणा भवति वृषा हि राजेति व्रात्यस्तोमानां च ज्येष्ठयज्ञे राजजातीयत्वा-द्वैतस्मिन्नेव तन्त्रे बृहत्पृष्ठे सूर्यवत्यो न चेच्छन्दोम-विलोप उत्तमाद्वा पृष्ठादार्भवे स्तोमं प्रत्यवरोहः प्राग् ज्योतिष्टोमविचारेभ्य एतयोस्तन्त्रयोः स मास मुभय-

---

* "सार्थी चिकीर्षा"-इति ष।

सामतन्त्र मित्याचक्षते प्रतिलोम मग्निष्टोमेष्वनु-
लोम मुक्थ्येष्वग्निष्टोमभक्तिर्हि स्वादिष्ठोक्थ्या भक्ति-
र्यस्ते मदाय यचैकर्चौ माध्यन्दिनीया भवन्तीन्द्रा-
येन्दो मरुत्वत इति तत्र करोत्येषा सामान्या तृच-
प्रथमा मरुत्वतीत्यथ यत्रान्ये माध्यन्दिनीयार्भवीये
भवतः कल्पसप्रायाणि च द्रव्याणि तदाशीस्तन्त्र
मित्याचक्षते ऽथ यत्तदभिवादि द्रव्यं भवति यत्कामः
क्रतुस्तत्कल्पसप्राय मित्याचक्षते तदेतत् सार्वक्रतु-
कम् ॥ २ ॥

अथैतानि बृहद्रथन्तरयोर्विभक्तानि स्थानान्यपी-
तरेतरस्य तन्त्रं गच्छतोः प्रतिपदाज्यानि ब्रह्मसा-
मौष्णिह मित्यभीवर्त्तस्तु राजयज्ञेषु भ्रातृव्यस्याभि-
वृत्त्यै भ्रातृव्यवान् हि राजेति यत्र वोभयसामा सन्
रथन्तरपृष्ठोमा नौधसेन बृहतः प्रत्याहारो ऽभूदितीव
यत्र वा प्रजापतिप्रवाद एकाक्षरणिधन एकः प्रजा-
पति रिति यत्र वाहर्गणस्य नाना ब्रह्मसामानि
चिकीर्षति तत् प्रथमे ऽहनि करोत्यक्षरणिधनानां *
प्रथम मायतन मिति श्यायन्तीयं प्रायश्चित्तार्थेनैव
भवत्यथ यत्र नाग्निष्टोमसाम भवति तद्यज्ञायज्ञीय

* "करोति यथाक्षरणिधनानां"–इति ख ।

मनुष्टुभि भवत्येष नेदिष्ठे चतुष्पद आवाप इत्यथ यत्र ग्रावाग्र्यं प्रच्यवते तद्रथन्तरपृष्ठेषु युध्यं निहवानुग्रहाय व्रात्यस्तोमेषु च व्रात्याना मुपहवायाथ यत्र स्तोमप्रत्यवरोहस्तद् बृहत्पृष्ठेषु पौष्कलए रोहदर्शनए शुध्यं स्तोमप्रत्यवरोहे न चिकीर्षति विषमेषु स्तोमेष्वभि सोमा राथन्तरेषु परीता वार्हतेष्वेते राथन्तरीवार्हत्याविति तच गोआयुषोऽर्द्धे चतुर्ऋचस्थे कुर्वन्ति भाल्लविनश्चतुरस्तृचैकर्चान् व्यत्यासेन कालवविनोऽध्यास्यायां त्ववेकर्चावद एकस्यां प्रथमाया मष्टस्तिस्टषु परास्वद्वितिस्टषु पूर्वास्वदो ऽध्याख्याया मिति शाण्डायनिनस्तृचप्रथमायां वय मेकर्चं कृत्वा तस्मिन्नेव तृचे द्वे तृचस्थे अध्यास्याया मन्तत एकर्चं ताएश्चयकर्णकृमेष्वाचचत इतरथी अनध्यास्यायां मध्य एकर्चावभितस्तृचौ यथैतदग्निष्टुत्सुपभ इति ॥ ३ ॥

विभक्तावुक्थ्यप्रणयौ प्रमएहिष्टीयवन्ति राथन्तरेषु साकमश्ववन्ति वार्हतेष्वृहएशीयान्तान्युभयेषां पङ्क्तानुग्रहायाथ यत्र चतुर्थो भागः प्रत्युपशेते नार्मेधं वा नार्मेधसदृशं वीकुर्यान्तेषु चिकीर्षितं भवत्यथैतौ विश्वजिदभिजितौ पृष्ठ्यपृष्ठेऽ स्तोमयोरन्तस्य वेति शाण्डिल्यः पृष्ठ्यस्तोमस्याभिजित्पृष्ठस्य विश्वजित्-

पृष्ठ्यदशरात्रयो रित्येक एतेनैवानुपूर्व्येण बृहद्रथ-न्तरपृष्ठ मभिजितं पृष्ठ्यस्तोमन्यायेन रथन्तर मग्नि-ष्टोमसाम रथन्तरभक्ति रयं भवति पूर्वत्त्वात् तद्बृह-तानाध्यगिशायथिषीज्योतिष्टोमतन्त्रपूर्वत्वात्तत्रया-न्यभिवत्थभिरूपाणि तानि जितिप्रवादान्युभयो रभि जितोऽतिरात्रो भवतो ब्राह्मण थाज्य मुद्वत्याग्नि-भस्तोत्रीयं मानसञ्चर मिति सञ्चारये दिति धान-ञ्जय्यः किए हि यो ऽह्नो रात्रि मुपसञ्चारये दिति न सञ्चारये दिति गौतमो ऽसञ्चारकुशला यज्ञा भवन्ति तत्रैतत् करोत्यभि प्र गोपतिं गिरेत्यभिवतः स्थानेऽभिवत्युद्धान मुष्णिहि रथन्तरभक्तित्वान्न शुध्यं चिकीर्षति नो पौष्कलं बृहति पृष्ठे तत्रैतत् करोत्युभयभक्तिमिश्रणिधनए सर्वपृष्ठं विश्वजितए रथ-न्तरं मध्यन्दिने बृहदग्निष्टोमसामैव मित्र ब्राह्मणं भवति यद्यन्तरं प्रथमं बृहदुत्तमं मध्य इतरा-णीति ॥ ४ ॥

वैराजए होतृषामैतद् बृहत्यरोच मेतच्चैषा मेक-निधन मेकनिधनानि होतृषामाणि भवन्ति महा-नाम्नीमैत्रावरुणसामैता अवुक्ता वामदेव्यस्थाने ऽभि-रूपा वैरूपं ब्रह्मसामैतत्सर्वंबृहतीषु सर्वंबृहतीप्रायाणि

ब्रह्मसामान्येवं च स्वस्तोमानि भवन्ति रैवतीरच्छावाकसामा स्वस्तोमा अप्रवादाहाय गायत्रीष्वग्निष्टोमसामैव मित्र ब्राह्मणं भवति यज्ञायज्ञो भवन्ति तेनायतनान्न च्यवन्त इति तासा मेकविꣳशत्यचरा प्रथमा तेनैकविꣳशान्न च्यवन्ते कथं धर्मा इत्यकर्त्तव्या इत्येके स्वस्थानानि हि भवन्ति स्थानस्थाधर्मा इति कर्त्तव्या इत्याचार्य्याः संयुक्तानि भवन्ति संयुक्तधर्मा इम इत्यथापि क्रत्वाग्निताव्याशीःसाधकतराणि भविष्यन्तीत्यथापि शिथिलानि परोक्षपृष्ठानि तेषां धर्मकरणेन दृढीभावो भविष्यतीत्यथाप्यस्वस्थानानि तेषां धर्मकरणेन स्वस्थानानीति चिकीर्षा स्यादित्यथापि विशुजिच्छिल्प इत्याचक्षते धर्माणा मेतद्याच्छिल्पानीत्यथापि सꣳशये ऽलोपो लोपान्न्यायतर इति न्यायतर इति ॥ ५ ॥

कथ मङ्गभूतस्य परिवासा इति कर्त्तव्या इत्येके विहिता अप्रतिषिद्धा भवन्तीत्यथापीदं पृष्ठधर्मैः समाधिरित्यकर्त्तव्या इत्यपरꣳ सर्ववेदससंयुक्तास्ते भवन्त्यपि चैते खल्वङ्गभूताः सर्ववेदस मिति ते खल्वेते धर्मा एतस्मिन्नेव द्वादशाहे स्युरिति गौतमोऽन हि संवत्सराग्निं वदतीत्यूर्ध्वं द्वादशाहात्

णोति धानञ्जय्यः कामं तु छवी द्वादशाह्निकी स्यादिति वार्त्तं तच्चं बृहद्भक्तिरत्राप्यत्र कालेयं प्रच्यवते ऽनुजिघृक्षितं तत्र भवति तद्यन्मध्यन्दिने ऽस्य स्वच्छन्द इति सत्रासाहीयं ककुभि सोढवन्नामजिति नामस्थिति भवति सफश्रुवो यद्यतिरात्र इति तु भवत्यतिरात्रः स कृत्स्नीभवति तस्मात्सफीभवतः सर्फं वा विच्याचयिपीतदेक उक्थप्रणये कुर्वन्ति सोढवन्नाम मा प्रच्योष्टेति पिपीलिकमध्यां करोति दशरात्रन्यायेन तां नित्यायाः पुरस्तान्निदधात्येवं पथ्यावसान मिति तद्यत्र गणी चिकीर्षा वा प्रजातकामो * वैव मेवैषतस्मिन्स्थाने भवति तत्र वामदेव्यं पृष्ठेभ्यः प्रच्युत मनुगृह्णाति वामदेव्यभक्तिन्यह्न्युत्पन्नेति वारवन्तीयं सर्वपृष्ठेषु चिकीर्षितं रेवतीसंयोगात् तद्यत् द्विपदासु द्विपदा भक्तिन्यह्न्युत्पन्न मित्यनु तत्त्व मुक्थप्रणयौ नाना षोडशिसामनी करोति नानात्वर्यो नानद मभिजितीयेतस्य पूर्वाभ्यर्थेनेति ॥ ६ ॥

अथ व्रतस्य स्तोमप्रदेशः पञ्चविंशतिस्तोमाः पञ्चक्लृप्तः पदं पञ्चक्लृप्तः पूर्वा देवता पञ्चक्लृप्त

---

* "प्रजापतिकामो"-इति ख ।

उत्तरा ऽप्याप्याहुर्व्यवस्तोभेत्यद्दैवत मेवं समाधिः पद्दैवतस्येत्येते वापि दैवते व्यवस्तोभेदित्येक एवं समाधिर्दैवतयो रित्येते वाप्याहुर्दैवते व्यवस्तोभेदिति शाण्डिल्यो ऽथ कालबविनो यथासमाम्नाय मेव कुर्वन्त्येतत्त्वेषां लघिष्ठ मपि च यान्यनुपदस्तुब्धा ऽप्या-न्याद्दर्शयति तेषा मुभयत स्तोभान्तसक्तन्निगदा एवास्य पुरस्तात्स्तोभा भवन्ति यत्त्वेव प्रथम मवोचाम तत् वार्मं ते खलु शब्ददेवा आत्मना प्रतिपद्यान्त आत्म-सत्तमान्यङ्गानीति शिरसा वयं शिरो वा अग्ने सम्भवतः सम्भवतीति भवत्यथैके शिरसा स्तुत्वाथ दक्षिणेन पक्षेणाथात्मनाथोत्तरेणाथ पुच्छेनैवं मध्य आत्मा भवतीत्यथापरेके शिरसा स्तुत्वाथात्मनाथ पक्षाभ्या मथ पुच्छेनैवं सम्यक् शिरश्चानूकं च भवतीत्यथैते शिरसा स्तुत्वा ऽथ पक्षाभ्या मथा-त्मना ऽथ पुच्छेनैव मिवाङ्गाना मानुपूर्व्यं मित्यथ यथै-तद्विद्वत्य स्तुवते तद्द्वय मेतद् ब्राह्मणवदित्यृग्यजुष सान्नि किं प्रत्यक्षं किं परोक्ष मिति ऋक्षं प्रत्यक्षं द्राक्षितं परोक्ष मपि वेन्द्रेति प्रत्यक्ष मिन्द्र इति परोक्ष मपि वा यथाग्राम एतदङ्ग माचष्टे तत् प्रत्यक्षं तस्यैषा · स्तुतिः ख्यातत्सर मिव ते पायुक्षंचु-

रनास्कम्भ इति यथासमाम्नाय मेवोपेयुरेव मिव ब्राह्मणं भवति यद्वै मनुष्याणां प्रत्यक्षं तद्देवानां परोक्ष मथ यन्मनुष्याणां परोक्षं तद्देवानां प्रत्यक्ष मिति तत् कुशलं यदस्मिन्नहनि दैवप्रत्यक्षं कुर्यु-स्तत्र खलु गोस्तन्त्रं करोतीतदन्तं तन्ततर मन्तक्षर मिदं भवति तत्र यो द्रव्यविकारो निर्वाकार्थो न भवत्यथापि प्राजापत्यं व्रत मनिरुक्तः प्रजापति रित्य-थाप्यद्य सऌस्तावान्यन्तोक्तं व्रत मिति स्तोम-कल्पाय चतुर्ऋच माहरति तद्यदेतद् यवं यवं नो अभ्यसेत्येतद्यवप्रवादं पुष्टिप्रवाद मन्नाद्यसऌस्ताव-मन्नोक्तोऽभिरूपं जरावोधीय मुभयसामसु चिकीर्षित मुभयविधेरेव हि भवति तदाग्नेययोन्यन्नाद्यसऌ-स्ताव मन्नोक्तोऽभिरूप मैकाहिकाद् वृतात् पञ्च-निधनं वामदेव्य मत्रनयति नाना मन्द्रा मतिमेद-नायेति भवति तदेकाहे नोपपद्यते यज्ञसामान्या-दहीनेभ्यस्तत्र स्यैत मनुतन्व मा नो विश्वासु हव्य मित्येतावद् ब्रह्मप्रवादा इतीलान्द मग्निष्टोमसाम कुर्वन्तस्तृचे कुर्युरेष आवृत्तिन्याय इति दशसु दश-स्वक्षरेष्वार्चिकान्यनुगानानोवं वैराजान्यनुगानानि भविष्यन्तीति पञ्चर्चे सर्वस्मिन्नित्याचार्या अर्द्धर्चेष्वनु-

गानान्येव ससएरोधतरो गीताना मिति द्वादशार्चं इति शाण्डिल्यस्तवापराश्चाग्नेयौ तृचावाहरेद्या ते अग्नि तं मन्य इत्येव मृग् दृष्टीन्यनुगानान्यृचु भविष्यन्तीति षड्चे तु कुर्वन्ति ये कुर्वन्त्यग्ने तव श्रवो वय इति चतुर्थ मेवानुगानं तृचे स्यादिति वार्षगण्यो ऽत्र हि निधनवाद वदति वृत मिति भवति स्वरिति भवति शकुन इति भवतीति भक्तयश्च कल्पन्ते नाना सामवत्त्वेनान्येके ऽधीयत इति ॥ ७ ॥

अथ साहस्रास्तिरात्राग्निं च वृताग्निं चोपक्लृता एव मिव ब्राह्मणं भवति तत्र त्रयाणां सम्पद् ब्राह्मणचोदिता न उपक्लृता एते स्तोमा भवन्ति ब्राह्मणविहितास्तृतीयस्तोभे सामनी करोति वृतन्यायेन चिरात्रन्यायेन च व्याख्यात मौभयं तन्त्रं पूर्वयोः पङ्क्तिषु ब्रह्मसाम यत् सहस्राचरासु ब्रह्मसामैत्येव मक्षरसहस्रएं सम्पद्यते बार्हतं तन्त्रं तृतीयस्तोकृथ्यत्वादग्निं दूतं वृणीमह इत्युभयान्याज्यानीति तत्र पूर्वे बार्हते उत्तरे राथन्तरे इति शौचिवृक्षिरेवएं समविभागो देवताना मित्रैकदेवत्ये बार्हते द्विदेवत्ये राथन्तरे इति धानञ्जय्य एतद्द्वयोः समवयतोः कुशलं यदभ्यास इति व्याख्यातएं श्यायन्तीय मपि

चैकादशाचरशतानि सम्पद्यते तत्र नित्या सहस्र-
सम्पन्मौच मुकथ्येषु चिकीर्षित मुकथ्यदर्शनं
चापि च त्र्यचरणिधनं त्रीण्युकथानीति सौभरं
चैककुभं वेति विचारयन्ति नित्य मह: सौभरं स्याय-
न्तीयनियोगाद्वहणशीयनियोगाद्वा चैककुभ मिति
त्रिरात्रविधतम उत्तमस्त्रिरात्रिकः प्रतिपदस्याज्यानि
चैक मत्रिरात्रिक मिन्द्रं मिद् गाथिनो वृहदिति
तद्यत् करोति पृष्ठ मत्यविभाजयिषीज् ज्यौतिष्टोमं
तन्त्रं विभणशाशङ्क्स्त्रिरात्र एतत् प्रतिष्ठा विधतरं
तन्नयो रिति ककुभं माध्यन्दिन मुपाहरति ता
मुपरिष्टाद्गायत्र्या निदधात्येव मिय ममुत्र गायत्र्या-
नन्तर्हितेनेति तस्य स्थाने द्विपदां करोति पुरुष च्छन्दस
इति सतोवृहतीं करोति त्रिरात्रन्यायेन तान्निधने
वैरूपात् साचाद्रथन्तरं क्रियते सौभरं वृहतो वारव-
न्तीयण् रेवतीभ्यः पुरस्तान्निदधात्येवं पथ्यावसान
मिति तद्यत्र गणीचिकीर्षा वा प्रजापतिकामो वैव
मेवैतानि छन्दाण्सि युज्यन्त चाष्टमिकीस्त्रिष्टुभः
करोत्येता रूपसम्पन्ना इति तत्र वामदेव्यं करो-
त्येवं हि ब्राह्मणं वदति पवमानस्यान्तं वामदेवा
मिति स्वारण् सौपर्णं मैत्रावरुण सामैतद् वाम-

देवासदश मपुरस्तात्स्तोभ मेव बहिःस्तारं यथा वाम-देवाम् ॥ ८ ॥

अथ साद्यस्क्रेषु याः सद्यः प्रवादा नव प्रवादाः प्रोक्तावत्यो जनदत्यस्ता अभिरूपा अथ खल्वन्न पृष्ठान्यङ्गाश्चिकीर्षिता भवन्त्या माभिमानितो य मृतुप्रत्ययानि पृष्ठानि पश्चियाचनार्थानीति तानि यन्न साचादञ्सोमान्यभविष्यंस्तस्त्रैतच्छाक्करवर्णं शक्करीभ्यः प्रति वैष्टस्त्रवैरूपात्साचाद्रथन्तरं क्रियते सौभरं वृहतो वारवन्तीयठ् रेवतीभ्यः स्वाशिरामर्कों वैराजादायाश्च सुष्मिणि हि मध्यन्दिने स दक्षिणां प्रतिगृह्य विभ्रष्टेव स तृतीयसवने प्रायश्चित्तिं चक्र इति कथ मुत्तरयोः साद्यस्कधर्मा इति कर्त्तव्या इत्येके साद्यस्कैश्चाभि परीतौ भवतो ऽपि चे मे कालसङ्कर्षाङ्कवन्ति सङ्कृष्टकालाविमौ भवत इत्यकर्त्तव्या इत्यपरसाद्यस्कौ हि भवतो यद्वेतदभिपर्यायादिति सर्वं एवासाद्यस्कैरभिपरीता भवन्ति यद्वेतत्कालसङ्कर्षादित्युचावचाः कालविप्रकर्षा एकाहाना तदेवं बहु प्रसज्येतेति विश्वजिच्छिल्पे सामस्तोमे सति साध्यासां वृहतीं करोति कस्य हेतोरिति पुरस्तादापन्नानि वैभुजितान्यविच्यावयिपन्नविच्यावयिपन् ॥९॥

जिघाꣳसयन्न उत्तरस्तत्र या हतवत्यः क्रूराणि च सामान्यभिरूपाणि तानि त्रिकाख्याज्यपृष्ठानि करोत्येवꣳ सुपराञ्चि भवन्ति वज्रोक्तं च पञ्चदश मभि सम्पद्यते चतुरः पञ्चदशानर्पा सोम द्युमत्तम इति माध्यन्दिनीयाहन्यहे भवन्तीति शाण्डिल्यायन ऋपव्यृपित्यर्थानुस्नातकाः कुर्वन्ति भागविलोपे चोत्पन्ना भवतीति पराचीषु रथन्तर मिति द्विपदोत्तरासु पराग् भवति ककुभावेवेति गौतमोऽनभिवर्त्तश्चैतद् ब्राह्मण मिति पवमाने रथन्तर मित्युद्धृत्य वार्हतानि स्यादष्टे ऽथपदस्तोभः शाक्वरवर्णश्च त्रिणिधनानुप-हाय शक्करीणां च पवमानान्त्यं वा रथन्तरं तज्जाम्येव मिव ब्राह्मणं भवति यद्वै महावृचौ समृच्छेते वहु तव विभग्नं मभग्नꣳ शेत इति यद्वा वा यज्ञामि यौधाजयस्थाने दैर्घश्रवसं यदन्तरा सोमा यन्तीत्यु-परिष्टादनुदरन्ना वार्हतान्यनुकल्पयेत् तत्र पौरुमद्गं तृचसमाप्तये भ्रातृव्यवꣳश्चस्मिन् ब्राह्मणं दर्शयतीति यौधाजयापेतं वोत्सेधमध्यं कृत्वा पवमानान्यꣳ रथन्तर माध्वीगवश्च निधनो वृत्तिग्रहणात् वाम-देव्यꣳ स्वर्चि वाभिपदनार्थं इति धानञ्जय्यः प्रवद्देद महासाम स्यात् त्वमिन्द्र प्र तूर्त्तिष्वित्येतास्वेता

रूपसम्पन्ना इति श्यैतयोनी वा बृहत्पृष्ठत्वादयैष एकचिकः प्रजापतीप्सा मुपक्रतस्तचैतावुत्सेधनिषेधौ प्राजापत्यादह्नो निषेधो ब्रह्मसाम श्रायन्तीयब्रह्मवर्चसा ऽऽश्चितवती प्रायश्चित्तकृतो ऽभिरूपेत्यतो यो द्रव्य-विकारः प्रजापतीप्सया स भवति ॥ १० ॥

अथ व्रात्यस्तोमास्तत्र षोडश आशीःस्तोमः स एष द्वाचिंशो विकृतस्त मच्छावाकसाम्नो निद-धात्येतदानुष्टुभस्थान मित्यनन्तरा द्वाचिंशप्रयुक्ति-र्भविष्यतीति पवसानयोर्ज्योतिष्टोमानीतराणीति तत्र-या वीर्यप्रवादा बलप्रवादा गणप्रवादा द्रविणप्रवादाः शुचिप्रवादा निधनवत्यः पवित्राभिव्याहारा अभि-रूपास्ता यानि च गणसामानि हूतवन्ति तत्र यश्छन्दो योगविकारो गणीचिकीर्षया स भवत्यपि च चुद्रीचिकीर्षया ऽथ खल्वाह यन्निरुक्तं निधन मुपेयुर्गृहपतिरेवर्ध्नुयादपेतरान् प्रोतेति कथेदं ब्राह्म-णं स्यादिति नौधसप्रतिषेध इत्याचार्यास्तद्धि निरुक्तनिधनं भवतीति नेद मित्यथापर मा इन्द्रा इत्येवास्य निधनं निराङ्स्तदात्तथा स्यात्तन्निरुक्तं स्यादिति यथासमाम्नाय' त्वेवैव मनिरुक्त मिति ;ावग्निष्टोमस्तोत्रीयौ समामनामो इये व्रात्या भवन्ति

शीर्षादयश्चैषीकयात्रयश्च शीर्षादीनाꣳ सतोवृहती-ष्वग्निष्टोमसाम कुर्यादिति धानञ्जप्यो ज्यायसस्तान् ब्रुवत एषीकया वीर्णा प्रगाथवृहतीषु कैनो विद्या-दिति स्वयं ब्रुवीरन् ज्यायाꣳसः खलु शीर्षादयो ब्रुवते षोडश इत्युत्तरश्च खलूक्थं करोति षोड-शयोः स्थाने चिकीर्षꣳस्तावादवसानयोर्निदधा-त्येवꣳ समाधिः पवमानाच्छावाकसाम्ना मिति कनिष्ठयज्ञ उत्तरो ये तु खलु जन्मना कनिष्ठा ये हो वयसेति ये जन्मनेत्याहुस्ते हि कनिष्ठा इत्याचक्षते यथाहुर्ये वयसा सखिवारिणो हि व्रात्या भवन्तीति व्याख्यातौ षोडशावच्छावाकसाम्नोरुद्धरति स्तुध्यꣳ स्तोमसꣳरोधात्तत्र महताꣳ स्वꣳ स्तोमं करोत्याशीः-स्तोम मा प्रच्योष्टेति विहरति श्यावाश्वान्धीगवे ऋचा वीप्सन् ॥ ११ ॥

ज्येष्ठयज्ञ उत्तरो ये तु खलु जन्मना ज्येष्ठा ये हा वयसेति तत्पूर्वेणैव व्याख्यातं तच दाशरात्रिकाꣳ स्तोमानुभेव सामनो करोति ज्येष्ठयज्ञं कृत्स्नं चिकीर्षन्नथापीमं द्वात्रिꣳश माशीःस्तोमꣳ साधान् ज्येष्ठयज्ञे ऽचकीर्षीत् स आदीयमानः सर्वांत्स्तोमाना-दायेत्तां स्तु यदेवं प्रयुक्त एव मनवकारिणारोहो भव-

त्यष्टाचत्वारिꣳशात् परस्तादन्तरिताविति त्रिणवत्रय-
स्त्रिꣳशावभिरूपान्तो द्वाविꣳशो वाचिकीर्षेत कनी-
याꣳसौ स्तोमावुपायुरिति नु भवति त्रयस्त्रिꣳश-
द्वात्रिꣳशावितीवैतद्भवति द्वे त्रिणवत्रयस्त्रिꣳशे द्वे द्वा-
त्रिꣳशत्रयस्त्रिꣳशे इति वा खलु तत्कुर्युः सर्वान्वैवा-
रूढानुपेयुरित्यकुशला ऽनुव्याहृतान् कौषीतकीन्
मन्य इति धानञ्जय्य एवꣳ ह्येवेषु सत्सु दोषो भवति
तत्र यो दोषो ऽर्थकारितः स भवति कथ मनिष्टप्रथम-
यज्ञानां व्रात्यस्तोमा इत्यकर्त्तव्या इत्येके ऽनारभ्य
वदति य एतेनानिष्ट्वेत्यथाप्येषा ज्योतिष्टोमे प्रति-
पद्विधीयते ऽथापि यथा नानाहिताग्नीना मेव मथ्य-
निष्टप्रथमयज्ञाना मितिकर्त्तव्या इत्यपरं प्रायश्चि-
त्तार्था इमे भवन्ति प्रायश्चित्त मु खलु पूर्वं विधीयते
ऽथापि ज्योतिष्टोम एव प्रायश्चित्तस्य पूर्वत्वं दर्शयति
यथा कलशे दीर्णे विरिक्ते ग्रावापि शीर्णे इति यद्दे-
तद्य एतेनानिष्ट्वेति प्रकृतिभूताना मेतद्भवति यद्दे-
तत् प्रतिपद् विधीयत इतीष्ट्वा व्रात्यस्तोमेनैत्येतदुप-
पद्यते यद्देतद्यथा नानाहिताग्नीना मिति सिद्धि-
कारित मेतद्भवति ॥ १२ ॥

अथाग्निष्टुत्य या आग्नेय्यः पठिताभिव्याहारा

ज्योतिष्टोमीभिः सदृशव्यञ्जना यथास्थान मभिरूपा-
स्ता रुद्रवतीस्त्रिष्टुभः करोति रुद्रो मरुतां पिते-
त्याहुस्तेन मरुत्वदनुग्रह इति गायत्रीष्वग्निष्टोम-
सामैतदाग्नेयं छन्द इति स यदेता उप त्वा जामयो
गिर इत्येता वायव्या इति तद् वारवन्तीयं गायत्री-
सामैड ऋचा स्तोत्रीयं तेन प्रच्युतं यज्ञायज्ञीय मन्वं
करोत्यत्र हि स तृचतां लभते तदेतत् स्तोमसंरोध
एव मेव भवत्यैन्द्रीषु स्युरिति सोऽयं पूर्वं स आग्नेय्य-
स्तोत्रं चिदैन्द्रं भविष्यतीति स यदग्निष्टोमसामान्ता-
न्याग्नि कर्माणीति सप्तदशे विषमे स्तोमे सप्तन-
ध्यासां बृहतीं करोति कस्य हेतोरिति न ह्याग्नेयी
साध्यासा विद्यते तस्यां चत्वारि सामानि तृचावभित
एकर्चौ मध्य एवं तृचप्रायणं तृचोदयनं भविष्यतीति
त इमे पञ्चानुवाकाश्चत्वारः कल्पाः स एष प्रथमः
सर्वेषा मेव सार्ष्टः स्यादपि वा प्रथमस्य द्वौ स्याता
कथं भक्त्या इत्याग्नेया इत्येक एवं यथाथ भवत्यथा-
प्यत्र सुविप्रतिपिद्धरूपाण्यनाग्नेयानि भवन्त्याग्ने-
यानि यथा हविःस्तुतिः पवमाना इति यथाप्रक्रा-
न्तीतरपरं भक्त्यविशेषान् विदधन्नाग्निष्टुत्सु विदधा
तत्रापि क्रताविव वा यथार्थं भवन्ति यथा मैत्रावरुण्य-

ऽग्निष्टोमसाम्नीत्युत्तरेऽवगमय इति स्थाने सुब्रह्म-ण्यायां देवा इति ब्रूयादैन्द्रत्वादग्निष्टोमसाम्न इत्येके ॥ १३ ॥

॥ इति निदानसूत्रे षष्ठः प्रपाठकः ॥

---

## ॥ अथ सप्तमः प्रपाठकः ॥

अथ त्रिवृतस्तेषां प्रथमस्य यो द्रव्यविकारो निर्वा-कार्यो न स भवति पुरोधाकामयज्ञ उत्तरः स्थपति-सवो वयं समानाः श्रेष्ठो * संवृणीरन् ब्रह्मसवो वा ब्राह्मणस्य यज्ञेन जिजनियमाणस्य त्रिवृतः स्तोमं सम्पद्यते लघुरीसाया मभिरूपो यः स्तोमस्याय मेष गच्छति यः पुरोधां यः स्थापत्यं यस्य तु स्याद् ब्रह्मसव इत्येषा ब्रह्मणा भक्तिरित्यनुसवनं दक्षिणा ददाति कस्य हेतोरिति बृहस्पतिरभिषिच्यमानो देवगणेभ्यो दक्षिणा आजहार वसुभ्यः प्रातःसवने रुद्रेभ्यो माध्य-न्दिने आदित्येभ्यस्तृतीयसवने ऽष्टादशा मध्य-

* 'देवा' ख।

-न्दिने ददाति दक्षिणा वेलाया मन्याधित्वन्मन्यते ह्येनेनेषोद्र्व्यसमुद्देश उक्त उद्धरति शाक्करवर्णं साद्यस्क्रसाम तद्भवति तचैतज्जरावोधीय मेतद्गायत्री-सामापन्न मपि च रुद्रवद्योनिवधार्थे ऽभिरूप मुद्धरति वषट्कारणिधनं तस्य स्थाने सप्तहङ्करोति।तद् वृहता समानयोनिर्विधार्थे ऽभिरूप मुद्धरति स्वारे सप्तर्च-नवर्चा करोतीति प्राणोक्ता इति ते वृहत् तस्य स्थाने वषट्कारणिधन मेषा देवेषुर्भवति ता माणीर्ध्वनि-र्द्रेमन् ॥ १ ॥

सर्वस्वारे सप्तर्चनवर्चान् करोत्येते प्राणोक्ता इति तेषां विलोपेन प्राणविलोपो भविष्यतीति स यत्प्रथ-माःस्तृचानेते रूपसम्पन्ना इति चतुर्ऋच मैन्द्राग्नः समामनामो प्रवत्यासां द्वितीया ता मुद्धरति सर्वाः प्रवत्यो भविष्यन्तीति गायत्रीणां पृष्ठापदानाद् वृह-तीषु मैत्रावरुणसाम करोति त्रिस्थानां वृहतीं पृष्ठेषु चिकीर्षंःस्तचैतन्मेधातिथः स्वयोन्युपन्नं पुरस्ता-देतत् स्थान मनभिवतीष्वप्रवतीषु होविषपृष्ठानि स्वयोनीनि चिकीर्षन् विराड् * वृहतीष्वग्निष्टोम-साम प्रागादनुप्रहरतेति ता यदावर्त्तयत्येवं प्रवृत्या

* "परात"-इति ग।

प्रक्रम इति तत्र यज्ञायज्ञीय मन्त्रसमाधये तस्याक्षरसंख्येन प्रस्तावयति प्रगाथीकाराय पूर्वस्याश्वान्यङ्गे या याश्वाघ मेघोऽक्षरसंख्यस्तद्यत्र यचैषां तृचापत्तिर्बृहद्रथन्तरयोर्यज्ञायज्ञीयस्य चैव मेवैषां प्रस्तावयति दैर्घश्रवसं स्वासु यदि जीवेदिति तु भवति न चेद्दशकर्त्तुमुत दीर्घं गृणुयादित्यपि वा प्रायणार्थमेव स्यात् स्वारञ्च हि भवति प्रवद्धोनि वेति ककुबुत्तरासु ककुबुत्तरास्थानं हि सर्वबृहतीष्वेक एवं स्वर्गकामयज्ञे रोहोऽपि वा स्वर्गीतां बृहतीं स्वर्गकामे यज्ञेऽचिकीर्षीत् पुरस्तान् नाना बृहत्य इति वा तन्त्रे विप्रतिपद्यन्ते प्रथमतन्त्र मित्येके गायत्रीभ्यां जानीम इत्याशीस्तन्त्र मित्यपरं प्रवतीभिरयं क्लृप्तस्ता एताः प्रवत्य इति ॥ २ ॥

अथातश्चातुर्मास्यानि स एष षडहो विहृतस्तत्र षाडहिकान्स्तोमान् करोति षडहन्यायेन तांस्तत्र यदेवं प्रयुङ्क्त एवं रोहो भवत्यथापि नाना दीक्षावभृथानीमानि सर्वाणि भवन्ति तत्र सर्वाण्यऽहन्युपक्रमः स्तोमेन प्राचिक्रमिषीदथाप्येव मेनानन्तश्छिन्नानन्ततो ऽध्यवस्यतीत्युपयन्ति तन्त्राणि पृष्ठानि संख्या इत्यङ्गां विक्रमादैकाहिकान्येकाहे द्वैरात्रि-

काणि द्विरात्र उद्धरति रात्रि मपरिकाण्डतया
ह्यहस्य त्रिरात्रिकाणि त्रिरात्र उद्धरति वामदेव्यं
चाग्रमतान्त्व्रापरिकाण्डतया त्र्यहस्य नाना ब्रह्म-
सामानि नानार्थ त्वैतनौधसवर्णानि वार्हद्रयन्तर-
पृष्ट्याद् यौक्तस्य च मेवाद्याशराविकं तदेतत् पूर्वदर्शा-
नुग्रहाय शग्धप्रापु श्चीपत इति प्रथमस्याह्नो ब्रह्म
साम स्तोत्रीयो वैश्वदेवस्यायु स्थान मापन्न एषा
विश्ववती भवतीति पञ्चप्रतिपत्कान्यह्वान्यत्वभी-
ज्यायां पञ्चर्तुः संवत्सर इति पञ्चा मह्नां प्रतिपदः
पड़ृतुः संवत्सर इति त्रिष्टुभं वैश्वकर्मणीं करोति
न हि गायत्री विद्यते समापद्यन्ते त्रिरात्रे भागा-
स्तदनु द्रव्याणि हाविष्मतं द्वितीये ऽहनि त्रिरात्रस्य
कुर्यादिति धानञ्जय्य ऋद्धिसामाग्रच्योष्टेति यौक्ताश्व
मेवेति गौतमः क्रतव्ं हाविष्मतं द्विरात्रे तृतीयस्थानञ्च
हाविष्मतं त्रिरात्रे तचैतत् सव्ंहितव्ं शुनाशीर्य-
सन्तानाय ससुन्वेयो वसूनां प्राणाः शिशुर्महीना
मिति पञ्चमषष्ठाभ्या मुष्णिक्-ककुभौ षडहसमीपम्ः
प्रत्याहरत्येतेन न्यायेन द्विरात्रप्रभृतिष्वहर्गणेष्विति
भवतो न चेत् क्रतागमो भवति द्विपदातिच्छन्दसौ
दशरात्रन्यायेन ते जगत्याः पुरस्तान्निदधात्यन्त-

च्छन्दसी अन्त इति ते ऽयं न सर्वान्ते नासवन च्छन्दो-
ऽन्ते ऽचिकीर्षीत् तचैता वाजदावर्यो ऽन्वाम्विता
अया रुचेति नित्यवत्सा स्वयोनय एतेन न्यायेन
त्रिरात्रप्रभृतिष्वहर्गणेष्वेते भवतो न चेत् स्तोम-
सदुरोधो भवति ॥ ३ ॥

अथैते सप्तदशास्तत्र वार्हतेष्वाष्टमिकं पञ्चनं
करोत्येतद् बृहद्भक्तिनो ऽह्न इति तार्त्तीयिकं रथन्तर-
पृष्ठेष्वेतद्रथन्तरभक्तिन इत्यनिरुक्तः प्रथमस्तत्र यो द्रव्य-
विकारो निर्वाकार्थे न स भवत्यथ खल्वाह मारुती
भवति पौषी भवति वैश्वदेवी भवतीति केनो विद्याटे-
तद्देवत्या इमा भवन्तीत्येतद्देवत्येषु समाम्नाता इति
यानि गोः सामानि तानि सामान्यनुपूर्वं सदुहित
मेवैतदाग्निष्टोम्यात् क्रियते स्वर्गकामयज्ञ उत्तरस्तत्र
यो द्रव्यविकारः स्वर्गकामयज्ञत्वात् स भवत्यथ
खल्वाह सोमपीथ तदनु द्रव्याणि हाविष्मतं द्वितीये
ऽहनि रात्रञ्च कुर्यादिति धानञ्जय्य ऋद्धिसम मा
प्रच्योष्टेति यौक्ताश्व मेवेति गौतमः क्रतदु हाविष्मतं
द्विरात्रे तृतीयस्थानं च हाविष्मतं त्रिरात्रे तचैतत्
सदुहितद शुनासीर्यसन्तानाय ससुन्वेयो वसूनां
प्राणाः शिश महीना मिति पञ्चमषष्ठाभ्या मृष्णिक्-

ककुभी षडहसमोप्सुः प्रत्याहरतीत्येतेन न्यायेन द्विरात्र-
प्रभृतिष्वहर्गणेष्वेवैते भवतो न चेत् कृतागमो भवति
द्विपदातिच्छन्दसो दृशराचन्यायेन ते गत्याः पुरस्ता-
न्निदधात्यन्तच्छन्दसो ऽन्त इति ते यत्र सर्वान्तेन
सब नच्छन्दोन्ते ऽचिकीर्षीत्तचैतो वानदावर्यो ऽन्ना-
न्विता अग्ना रुचे ऽग्नाविद्धोहायेत्यनन्यत्र भाषा ये
त्वेतदवोचदिति स्वर्गकामयज्ञ एवोत्तरस्तचेमे सामनो
बहुदचिण्यादपि वा स्वर्गकामयज्ञत्वादेवैव मिव
ब्राह्मणं भवत्यनड्वाही वा एतौ देवयानौ यज-
मानस्य यद् बहद्रथन्तरे इति वैश्ययज्ञ उत्तरस्तस्य
कारवरथन्तर मभि त्वा पूर्वपीतय इत्येतासु कुर्या
दिति लामकायनो यथा वा अप्पर्यायाः शूद्रस्तस्य
मुहिगिदतो देशीय गीतस्य एतद्रथन्तरस्वर्द्धु कुर्यादेतासु
त्वेव स्यादेतासाए हि स्वान मापद्यते चैताः परोक्षे
पृष्ठे षडह इति सर्ववृहतीषु नान्यद् बृहद्रथन्तराभ्या
मर्हति पच मुत्तरासु स्यात्तं खलु विशुवतीभिः काल्प-
यत्येगद् भक्तिर्वैश्य इति तन्ते विप्रतिपद्यन्ते ज्योति-
ष्टोमतन्त्र मित्येके गायत्रीभ्यां जानीम इत्याग्नी-
स्तन्च मित्यपरं विशुवतीभिरयं क्लृप्तस्ता एता विश्व
वाय इति तत्र यो द्रव्यविकारो वैगृदेवोचिकीर्षया

स भवति यान्यायुषः सामानि तानि सामान्यनु-
तन्त्रं यान्यन्यानि पृष्ठानि ब्रह्मसामभ्यां विशोविशीय
मुत्तरस्या मग्निष्टोमसाम ककुबुत्तरासु ककुबुत्तरा-
स्थानं हि स्वर्गकामयज्ञ उत्तरस्तत्र खलु गोसन्त्वं
करोरयेतदन्ततन्त्रतर मन्त्रविधोऽयं भवत्यनिरुक्तं मात-
स्रवनं तत्र यो दृष्यविकारो निर्वाकार्थे न स भव-
त्यथैतद्वैवस्थानं स्थितनिधन मुतास्विक्त्रौस्तितष्ठे-
दिति तस्य रथन्तरं पृष्ठं वाजपेयसाम हि वृहत् करि-
ष्यन् भवरयज्ञोक्तोऽर्को वानोक्त मन्नं स्वं नश्चित्र
उत्येति वारवन्तीय मग्निष्टोमसामैता राधस्वत्यः
स्वर्गकामयज्ञे ऽभिरूपाः ककुबुत्तरास्थानं हि सर्व-
बृहतीष्वेके तद्व्याख्यातं सर्वस्तारो ऽनुतन्त्र सुकथ-
प्रणयाय *॥ ४ ॥

अथैषो ऽभिषेचनीयस्तस्य द्वात्रिंशाः पवमाना
अनुपूर्व मावृत्तिस्थानेषु पञ्चदशप्रभृतीन् भागस्तो-
मानेते माधा स्थाना इति तत्रोभे सामनी आङ्गर्दा-
श्विस्याद्याप्युभे ईप्साया मभिरूपे उक्थसंस्थं करोति
द्वितीयेय मिज्या तत्र द्वितीयां सप्तस्था मिति
व्याख्यातम् वहिष्पवमान मन्यत् कविमतस्तत्र खलु

* 'सुकथप्रणय'–इति ख।

गश्वद् भालविन आग्नेयीं पावमानीं मुदरन्ति यथा चिवृतं न वय मुद्धरामः पृष्ठेभ्य इयं मत्येवं पृष्ठाना मविलोप इत्ययापि स्तोमप्रधानतरश्छन्दस इत्यानुष्टुभं पर्यासङ्करीत्यानुष्टुभो हि राजेति तासां मध्यमा मुत्तमां कुर्युः सूर्यवत्यन्ते ऽभिरूपे सम्भार्यान्वितान्याजान्यथ खल्वन राजसामानि करोति राजसूयो राजसामानीत्येकादश करोति त्रिष्टुप्सम्पन्नानि त्रैष्टुभो हि राजेति सर्वच्छन्दस्यानि करोति सर्वस्य कृत्स्नीकाराय न पाङ्क्तं करोति न हि पाङ्क्तं राजसाम विद्मत एक मुदाहरन्ति सत्यश्रवसो वाय्यस्य मह्रे नो अद्य बोधयेति राजसूययाजी स बभूव नेह राजसूययाजिनां सामानि क्रियन्ते बार्हतानि भूयिष्ठानि करोति सवनच्छन्दो बृहत्यथाप्येतन्माध्यन्दिनच्छन्दो भवति बार्हतानि वाव भूयिष्ठानि लभत इति द्वे गायत्रीसामनी करोति द्वे बहिष्पवमानं मुखयोर्गायत्री भवतस्ते कुशलं यदनुपूर्वं पञ्च माध्यन्दिने पदाभेव एवए रोहो भवति देवस्थानं वरुणसाम सोमसामेति देवराज्ञाए सैभुचितं दैर्घश्रवसं पार्थं काक्षीवतं ब्राह्मणसाम सद्राजसामसूपसङ्गायते घत्रमार्गेण चचार राजसूययाजीव बभू·

वेति दैवोदासं वाभ्रुवं वैतहव्यं चासदश्चव मिति मनुष्यराज्ञां दैपद उक्थप्रणयो विभ्रठ्शाशङ्क मिदं कर्म द्विविधेन प्रतिष्टेति तचेतत्ववासाद्यीयं सोढ़व-न्नाम राजयज्ञे ऽभिरूप मनुपृष्ठ मितरे सद्योवि-शीयं दध्यपेयस्य मध्यन्दिने यिशीयं राजयज्ञे ऽभि-रूपं वारवन्तीय मग्निष्टोमसामस्वाम्वेवठ् वारवन्तीय मिति ॥ ५ ॥

प्रतीचीनस्तोम उत्तरस्तं खलु वृहत्पृष्ठं करोत्ये-तद्भक्तिः क्षत्रिय इत्यतिरात्रसठ्स्थं करोति चतुर्थीय मिज्या तत् चतुर्थीठ् सठ्स्था मित्यथापीदं द्वितीयं यज्ञस्थाने यदहीनो द्वितीयो वर्णः क्षत्रिय इति ज्योतिष्टोमं तत्त्व मेतदिह भक्तिस्तयोरय मु लोकः क्षत्रियस्येति स्तोमकारित आवापो व्युष्टिद्विरात्र उत्तरस्तस्यामु मेव द्विरात्र माहरति तत्र दशस्तोत्रीया उपाहरति संवत्सरसम्पदे चतुर्विठ्शा वुत्तरौ पव-मानौ करोति वहिष्पवमानसमाधये सप्तदश-त्रिणवौ प्रच्यावयति तावनन्तरयोः स्तोत्रयोरनुप्रनात्येकविठ्-शान्युक्थानि करोति विभ्रठ्शाशङ्को द्विरात्रस्यामु मेव प्रतिष्ठास्तोम मभि प्रायुङ्क्तेतद्विशोविशीयं राजयज्ञे ऽभिरूपं क्षत्रियस्य धृति. किमर्थं इत्या-

लुब्धजनपदोऽयए राजा तस्य घनसंयमार्थः घनसं-
यमार्थः ॥ ६ ॥

अथातो द्वन्द्वा द्वन्द्वयाचक्षते तेन सर्वे द्वन्द्वाद्वन्द्वे
मिथास्तु भवन्ति यौ यावेयाए समान मर्थ मुपकृतौ
तौ तौ द्वन्द्वौ भवतो राज्यकामयज्ञः प्रथमस्तस्य यदेवं-
विधः स्तोमयोग एव सप्ताविंशकविएशान्तसम्पद्यात इति
सप्तदशं पवमानेषु निदधात्येष विड्-स्तोमो भवति
विट्कामो राजा ऽथापेप्रते ग्रामा इव सुत्याया
यत्पवमानाः सम्पूर्णाश्छन्दोभिः सामभिरिति तत्र
विट्स्तोमए सप्तदश मचिकीर्षेदनुपूर्व मावर्त्ति-
स्थानेष्वतिशिष्टान् भागस्तोमानेवं चतुष्टोमो भवति
विभएशाशङ्क मिदं कर्म स चतुरेण प्रतिष्ठेति
व्याख्यात मौभयसाम्य मभिषेचनीये ज्योतिष्टोम
तत्र तद्व्याख्यातं केशवपनीये ऽन्नाद्यकामयज्ञ उत्तर
स्तत्र चतुर्ऋंच माहरत्येतदन्नाद्यसएस्ताव मित्या-
महीयवादुत्तर माभीक मेतदृष्टिसएस्तावं वृष्टिज मेव
मन्न माश्वीगवादर्कपुष्प मेतदन्नाद्यसएस्ताव मिति
प्रजातिकाम * यज्ञ उत्तरस्तत्रैकर्च मुपाहरत्येषा
वृषण्वती प्रजातिकाम † यज्ञो ऽभिरूपान्तरिक्षप्रवा-

* †, ‡ 'प्रजापतिकाम'—इति ख।

दान्वरिष्ठायतना गन्धर्वाप्सरस इति तत्र यो द्रव्य-
विकारः प्रजाति काम‡यज्ञत्वात् स भवति शुश्रुत्सद्यज्ञ
उत्तरस्य द्वादशं माध्यन्दिनꣳ सवनं त्रिवृतौ अभित
एव मिव ब्राह्मणं भवति यैकादशी या द्वादशीत्येका-
दशीः प्रातस्सवन उपसञ्चयीत द्वादशीस्तृतीयसवन
एवं गरस्य व्यपादानꣳ सिध्यतीति तदपि शश्वदध्वर्यव
उपाहरन्ति श्रीमो वै त्रिवृतः स्तोमो द्वादशो यत्
त्रिवृतो द्वादश मुपयन्ति पुनर्द्वादशात् त्रिवृतं तस्मा-
देप पुनस्तोम इत्युक्थसꣳस्थं करोत्येव मेतासाꣳ
स्तोत्रीयाणां व्युपादानꣳ सिध्यतीति स्तोमकल्पायैकꣳ
साम मध्यन्दिन मुपाहरति स यन्मेधातिथ मेतस्मा-
रिष्टवती योनिः प्रायश्चित्तत्वे ऽभिरूपे ऽत्यैतो यो
द्रव्यविकारः शुश्रुत्सद्यज्ञवान्त्स भवति ॥ ७ ॥

पशुकामयज्ञ उत्तरस्त्र चतुष्पर्यायान्त्स्तोमान्
करोति चतुष्पादाः पशव इति तदपि शश्वद् ब्राह्मणं
भवति यश्चतुश्चतुर्हिङ्करोतीत्यथ खल्वत्रानुष्टुभः प्रति-
पदः करोति पशुकामयज्ञे चतुष्पदा अभिरूपा इति
तास्तिस्रः सतीस्सतस्रो गायत्रीः करोति गायत्री-
स्थानꣳ हि भवति वारवन्तीयं यज्ञायज्ञीयचतुर्थे-
पूक्थस्तोत्रीयेष्वेव मिव ब्राह्मणं भवति नोकथ्यो

नाग्निष्टोम इति यद्वारवन्तीयं पशुसंस्थानं चापि च स्तोत्रीयाणां सन्निवारणाय पशुकामयज्ञ एवोत्तरस्तत्र चतुर्थ्यं च माहरत्येतत्पथ्यच्छन्द इति षोडशिसंस्थं करोत्येव मिव ब्राह्मणं भवति नौकथ्यो नातिरात्र इति पशुकामयज्ञरथान्तरायत्र उक्थ्यप्रणयः पशुकामयज्ञाविवेवोत्तरावपि वा द्विरात्रावेभि मुपक्रतौ स्याता मुभयेज्यानि ज्योगात् तत्र सप्त-सप्तदशौ स्तोमौ करोत्येतौ पशुसंस्थावा वित्येक-विंश मुत्तरत्र बहिष्पवमानं करोति त्रिकां होतु-राज्यं समायविकाङ्गौ व्याविवर्त्तयिषन्नेतस्मिं-स्तदेकविंशे पराक्रम्य त्रिकेण वज्रेण वलं विभि-देति लामकायनस्ता उ सप्त-सप्तदशावेव सम्पदेति नानातन्त्रे नानापृष्ठे द्विरात्रन्यायेन सञ्चारयति च न च सञ्चारयत्येकाहन्यायेनाहःसञ्चारणं द्विरात्र-न्यायेनासञ्चारणं जनुपेकवौं द्विरात्रन्यायेनौदला-श्मीगवे द्विरात्रन्यायेनाङ्गत इति काव मन्व मेषा सामन्या * हचप्रथमा पशुमवादेति सत्रासाहीयं युध्ये द्विरात्रन्यायेन श्यावाश्व-क्रौञ्चे द्विरात्रन्याये-नायंगोराजाथ स्तविष्यत इति काव † मन्व मग्रेग

* 'सामान्या -इति ख।  † "दाव -इति घ।

इत्यद्धेयं भवतीति शाण्डिल्यायनो गोप्रवादात्तु स्नातकाः कुर्वन्तीति ॥ ८ ॥

अपचितिकामयज्ञ उत्तरस्तत्र चतुर्विंश-पठान् परोक्षेवमिव ब्राह्मणं भवति वि ह्वयन्तीति चतुर्विंशचिषवावितीवैतद्भवति चतुर्विंशं पवमानयोर्निर्दशाति तेन प्रच्युती त्रिवृत्प्रदशावाज्यपृष्ठेष्वनुरहणाति ज्योतिष्टोमं तन्त्र मेतदपचिततरं तन्त्रयो रिति स्तोमकारित आवापोपचितिकामयज्ञ एवोत्तरस्तोत्राः स्तोमास्तस्य यदेवंविधः स्तोमयोग एवं विराजं सम्पद्यत इति द्विपदाः करोति दशरात्रन्यायेन स यदेता एता दशरात्रावसाने दृष्टा इति तत्र वारवन्तीय मन्त्रसामान्तच्छन्दसि सूर्यवत्यो दशरात्रन्यायेनाग्न्याभियजन उत्तरस्येवोभे सामनी करोत्यग्न्याभीज्यां कारस्तौचिकीर्षन् तथापुभयसामाग्निर्भवत्युभाभ्यां हि परिगीयत इति ज्योतिष्टोमं तन्त्र मेतदाग्नेय मिति स्वारं सौपर्णं पञ्चिसाम पञ्चभीष्टाया* मग्नेर्वंत मग्न्याभीष्टाया†ं स्वागिरामर्कोऽग्न्याभियजने व्रते दृष्टो भवत्यग्न्याभियजन एवोत्तरस्तत्र ज्योतिष्टोम मेवाहरत्येतदाग्नेय

* , । "भीष्टायां"-इति ख ।

मिति त्रिवृत्पञ्चदशावाज्यपृष्ठेषु सम्पद्दर्शनेन कुर्मो व्याख्यात मौभयसामं ज्योतिष्टोवायं विकृतस्तत्रै-तल मनुष्टुभि तृचसमाम्नये तदेतदष्टमात् पृष्ठा-न्वितम् ॥ ८ ॥

राजयज्ञ उत्तरस्तत्र द्वे स्तोत्रीये उपाहरति ककुद्-रूपं दिदर्शयिषन्नपिवा सप्तोविंशीयसामान्ते गृह्य-माणे सम्पदर्थ कारयेतां विषमे स्तोमे सत्यनध्यासां बृहतीं करोति ज्योतिष्टोम्यात् तथाः सामकाल्यो * व्याख्यातो ऽग्निष्टुति व्याख्यात मौभयसाम्यं ज्योतिष्टोवायं विकृतस्तत्र गौरीवित मनुष्टुप्स्वेतद्रूप-मोक्त मिति वैश्ययज्ञ उत्तरो वैश्यस्य राजमात्रस्य स्वाराज्ये मौप्सतो यज्ञः स्यादित्याहू राज्ञ एव खल्वयं संविरतस्य साहसिक्यादिड्भूतस्य कितवाशयस्य सवः स्यादिति शाण्डिल्यो ऽभिषेचनीयं प्रत्युपधावति सवसामान्याद् द्वात्रिंशद्पायादनुष्टुभः प्रति-पदो ऽपयन्ति कुयत्वं यद्रुपवती मेषा राथन्तरी राथ-न्तरो वैश्य इति व्यत्यासेन नित्यां बृहतीं करोति समो हि स्तोमो व्याख्यातावुत्तरो राजयज्ञ उत्तरस्त खलु बृहत्पृष्ठ मिन्द्रन्यङ्गाभिः कल्पयतेरतद्भक्तिः

* "साक मश्वो"-इति ख ।

त्रचिय इति तत् या इन्द्रवत्यो विस्पष्टास्ता अथापि
गुत्रप्रवादेन वृषखरप्रवादेन सूर्यवत्तयेरयैन्द्रं रूप
मनु गृह्णन् मन्यत इति तत्ते विप्रतिपद्यन्ते ज्यो-
तिष्टोमं तन्त्र मित्येके गायत्रीभ्यां जानीम इत्याभो-
त्तन्तु मित्यपर मिन्द्रवतीभिरयं क्लृप्ता एता इन्द्र-
वत्य इति तत्र यो द्रव्यविकार ऐन्द्रीचिकीर्षया स
भवति राजपुरोहितयोर्यज्ञ उत्तरस्त्वेवोभे सामनी
उभयानि व्यञ्जनानि देयज्ञा ज्योतिष्टोमं तन्त्रं नित्यं
बाह्मणयोक्तो यज्ञं ह्यनियत ॥ १० ॥

विजिघाएसद्यज्ञ उत्तरस्त्वेवोभे सामनी करोति
विजिघाएसद्यज्ञं क्रतुं चिकीर्षएश्चैतद्विगोविशीयं
विजिघाएसद्यज्ञे ऽभिरूपएं सोमसामाऽऽथर्वणं वेत्य-
भिचरतः सोमसामैतत्क्रूरणिधनं तस्य निधने विचा-
रयन्नीन्द्र इव दख्रूएं रम्णा२३४५ सूर्य इव दख्रूएं
रम्णा २३४५ वज्रिन्त्सुवच्चो २३४५ अपि वै सेर्वा
हे पूर्वे वोत्तरे वा सर्वाणि वा समस्यन्त्य मेव स्वर-
ऐद्यथा वायो भस्त्राया निहन्यमानायाः क्वादः
स्याद्यथा वायसौ सम्च्छियातां यथा वनिष्कः क्रत्तवेचा-
भिहतो ध्वनेद्यथा वासन्नपुरस्य पादस्य निघातस्य
ह्यणिति चाथर्वणं पशुकामस्यैतच्चतुर्णिधनं पशुकाम-

यज्ञेऽभिरूप मेव मर्थ एवोत्तरोऽपि वा नाज्ञात-प्रायश्चित्तये यत्रानाज्ञातं भय मागच्छेद्यथा साटव मा जगाम यथा, शिश्नुशिरो यथा वयःपतनं तद्-ध्येव मिव ब्राह्मणं भवतीन्द्र''मदेभ्यो माया अस-च्यन्तेति शाण्डिल्यायन एव नून तद्विदाञ्चकारेति ह स्माह धानञ्जय्यो यदर्थं दूम साजहारानाज्ञात इव खल्वयं योगो भवति तत्र त एव स्तोमा ये पूर्वस्य ताएस्तु यद्देवं प्रयुङ्क्ते ण मायावेकाद्दौ वाविवर्त्त-यिषएस्तन्त्वे विप्रतिपद्यान्त उभयसामतन्त्व मित्येके प्रत्यवत्यो स्त्रोता माध्यन्दिनीया इत्याशीरश्च मित्य-पर मनाज्ञातप्रायश्चित्तयेऽयं तत्रानाज्ञातयोगाश्चि-कीर्षन् गायत्र्याः स्थाने द्वे वृहत्यौ निदधाति ते संश्लुष्य तिस्रो गायत्रीः करोति गायत्रीस्थानएं हि भवति तत्र यो द्रव्यविकारो नाज्ञातप्रायश्चित्तये स भवत्यपि च विजिज्ञासया ॥ ११ ॥

अभिचरणीयावेवोत्तरौ तयोः श्येनैव द्रव्यसमु-द्देश उक्तो ये पूर्वयोः पूर्वस्य स्तोमा तयोः पूर्वस्योद्ध-रति सप्तदशनवदशौ प्रजातिसएभावाविति पङ्क्ति-शिष्टाद् द्विः स्तोत्रभाजः करोति सन्दएशरूपं दिदर्श-यिषन्नैडं ककुभि करोति पुरुषच्छन्दसः स्वरं विद्या-

वयिषएणन्वैतत् काशीतं चौगस्ररेडं चयं परेषा मिच्छतीति सामानुष्टुभि करोत्येतानि क्रूराणि सामानीति स यत् चयाणां प्रथम मेतदानुष्टुभ मिति पूर्वाध्याय पूर्वे यज्ञस्थाने ऽध्याय्येतत् क्रूरणिधनं वधार्थे ऽभिरूप मथापि वृहन्निधनेनानुग्रहणात्येय वै सामवर्ज्जं इति वृहद्रथन्तरयोर्वदति स्तोमकल्पायोत्तरे विहितवन्तौ टचा वाहरति तच तदेव साम स्यादिति धानञ्जय्यः समानार्थौ हि भवतो द्वितीय मिति गौतमः स प्रायावेकाहौ व्यावर्त्तयिषन्नथापेऽतदभिनिक्रुष्टगीतिवधार्थे ऽभिरूपं वज्रोक्तं प्रमण्हिष्टीय मुक्तो यत्र मौपगव मैडत्वात् षोडशिसाम्नो नार्मेधं करोति तत्रैतदुद्दण्णीय मेतेनैडाकामस्य सिध्यत्यजामिकल्पश्चेति ॥ १२ ॥

महानाम्नीः षोडशिसामैता वज्रोक्ता राजयज्ञे ऽभिरूपा वज्रो हि राजेति कथं धर्मा इति कर्त्तव्या इत्येकेऽपि ह्यासा मेष स्वाध्याये धर्मो भवत्यथापि धर्मिस्थान मापन्नाः षोडशिधर्मान् कुर्वन् कथं महानाम्नीना धमान् न कुर्यादित्यथापि वज्रोक्ता आपो ऽथापि सएगयो लोपो लोपान् न्याय्यतर इत्यकर्त्तव्या इत्यपरं पृष्ठापन्नाना वदति यदप उपनिधाय

स्तुवत इति तद्देतदपि छासा मेव स्वाध्याये धर्मा भवतीत्यपोव्वं वादः स्वाध्यायधर्मान् कुर्याद् यद्देतद्ध-र्मिस्थान मापन्ना इति धर्मिस्थान मापन्नतरं खलु सद्यन्तरं न धर्मांल्लभते यद्देतदज्ञोक्ता आपन्न इति शान्त्युक्ता आपो यः पश्चात्पत्नी उपस्तृणन्ति वैश्वानर मेव तच्छमयन्त्यापो हि शान्तिरिति ह्याह यद्देतत्पुण्यये लोपो लोपान् न्याय्यतर इति यो रथ-न्तरधर्मानकृत्वा महानाम्नीनां धर्मान् कर्त्तव्यान् मन्येत सदृशव्याघाते ऽपि तत्र वच्चोक्ततरा धर्मा इति धर्मा इति ॥ १२ ॥

॥ इति निदानसूत्रे सप्तमः प्रपाठकः ॥

---

॥ अथ अष्टमः प्रपाठकः ॥

अथातो ऽहीनाक्षेपा मुक्ता द्व्यायाा मन्वयो ऽपि दशरात्रावलोपाऽहीनास्तत्र सिद्धानि दाश-रात्रिकाणि द्व्याह्याहीनिकाा रात्रेः श्रीतकचरार्वी ऽपनयति सवन्धाहीनञ्च व्यावर्त्तयिपदृस्तवैता' करोति पन्थं पन्थमित्येतार इत्येताः सुतवतीनाए स्थाने सुतवत्य इति मध्यमस्य रात्रिपर्यायस्य होतृ-

ग्रामणी विचारयन्ति दैवोदासं वा स्यादौर्ङ्सद्मनं वेति विकल्पो वा स्यादपि वा दैवोदास महीने कुर्यात् पूर्वाध्याय पूर्वे यज्ञस्थान और्ङ्सद्मन सचेपूत्तराध्याय मुत्तरे यज्ञस्थाने ऽप्यप्यङ्गिरसचवादरूपो भवत्यौर्ङ्-सद्मन मपि शर्वरीषु प्रोहन्तीत्यथ खल्वाह्न त्रिणिधनं भवतीति कथं त्रिणिधनꣳ स्यादित्येतान्येतान्येव निध-नानि व्यवस्यन्त उपेयुः सुवृक्तिभी२३६५ नृमादना-२३४५म् भरे२३४५ पुवा२३४५ इति तदाहुर्नैच्छन् त्रिणिधनं यदनन्तराणि निधनानीत्यथ वा एतानि विहृतान्यनुपद मुपेयुस्तत्र निन्दा यदनुपायान्निध-नाना मभिव्याहारो ऽथवा एतानि पृथक्स्तोत्रीया-सूपेयुस्तत्र निन्दा यदनुपायान्निधनाना मभिव्याहारो ऽथवा एतानि पृथक्स्तोत्रियासूपेयुस्तत्र निन्दा यत् सप्रायायां निधनाना विप्रयोगो यथासमाम्नाय मेवो-पेयु स्थापि यथासमाम्नाय मेवैतत्त्रिणिधनं भव-तीति शाण्डिल्यायनो यत्तिस्रो निधनमात्रा भव-न्तीति सर्वेषु पदेष्वभ्यासात् सौमेधꣳ रात्रिपामेत्या-चक्षते कौत्स महीनादपनयति सनञ्चाहीनं च व्यावर्त्तयिषꣳस्तचैतदाष्टादꣳष्ट्र मूढिसꣳस्ताव मा ट्वा विशन्त्विन्दव इत्येतास्तिता: सोमवतीनाꣳ स्थाने

सोमवत्य इति समुद्रप्रवादा आवत्यान्ते ऽभिरूपा इति ॥ १ ॥

बुभूषद्यज्ञ उत्तरो ऽपि वा षडहाग्नि सुपक्लृतः स्यादेतेषाऽ स्तोमाना मुपधानात् तत्रोभे सामनी बार्हतं तन्त्रं बृहत्पृष्ठस्थोमवतीति प्रतिपत्कास्य हेतो-रिति बुभूषद्यज्ञोऽयं भवत्यनवधारितकाम इति सामकायनस्तत्र सर्वाभिप्रायां प्रतिपद मचिकीर्षी-दथापि षडहो ऽयऽ संलक्ष्णितः सैषा षडहप्रति-पन्नवत्यथाप्युभे स्थानवती अचिकीर्षीत् तन्त्रेण बृह-त्प्रतिपदा रथन्तर मित्यथापरेना मेवान्य वेदाः समा-मनन्त्यास्त्रौगवादुत्तर माथर्वणाऽ षडहोऽयऽ संलक्ष्णि-तश्चैतत्प्रायश्चित्तिः स्या मा पशुकामयज्ञ उत्तरो ऽपि वा हिरावाग्नि सुपक्लृतिः स्यादेतेषाऽ स्तोत्राणा मुपधानादृशरात्राग्निं वा छन्दोमाना मुपधाना-द्वाख्यात मौभयसाम्य मनुपृष्ठं तन्त्रं द्वयान्याज्यानि द्वयानि पृष्ठानि द्वैविध्यात् स खल्वाप्तोर्यामाणां पृष्ठानां वैश्वजितानि पृष्ठानि गर्भं करोत्येतानि नानात्वक्लृप्तानीत्यथापरेव साग्नितरा दशरात्रस्येति स कस्य हेतोर्गर्भान् करोतीत्येवऽ हि शश्वद् बह्वृचा अधीयते गर्भवन्ति पृष्ठानि भवन्त्याप्तोर्यामस्य तानि

गर्भकारं गच्छेत्पशवो वै पृष्ठानि यद् गर्भवन्ति भवन्ति प्रजननेनैव पशूनवसमर्द्धयन्तीति बृहद्वैराजगर्भं करोति वार्हतं वै वैराजं तेनैव तदनुरूपगर्भं वामदेव्यं महानाम्नीगर्भं करोत्यापो वै वामदेव्य मापो महानाम्न्यस्तेनैव तदनुरूपगर्भं श्यैतं वैरूपगर्भं करोति पशवो वै श्यैतं पशवो वैरूपं तेनैव तदनुरूपगर्भं कालेयं रेवतीगर्भं करोत्यैडं वै कालेय मैडारैवत्यस्तेनैव तदनुरूपगर्भं मथो द्वयदिडं कालेयं कसेडारेवत्यस्तस्मिन् मिथुनादेव प्रजायत इत्यपि वा सर्वाण्यावर्त्तीनि वैश्वजिते रावर्त्तिभिर्गर्भवन्ति कुर्यात् तत्र बृहत्यस्वरते तस्य वैरूपं विधृत्या इति तत्र गर्भविधान माचुर्मध्यमं पर्यायं सस्तोत्रीयं गर्भं कुर्वात् प्रथमोत्तमौ मुखाण्येवं गर्भोपपत्तिर्भवतीति कथं धर्मा इति कार्त्तवाा इत्येके गर्भभूतानि भवन्त्यनुभूतान्यधर्मा गर्भो भवतीति कथं धर्मा इति कार्त्तवाा इतरके गर्भ भूतानि भवन्त्यनुभूतान्यधर्मा गर्भो भवतीति कार्त्तवाा इत्याचार्यास्तत्र तान्येव विवचनानि यानि विश्वजिति सुरूपं जरावोधीयस्य स्थान एतत्पशुसंस्ताव मित्युद्दरत्याथर्वणं द्विपदा अत्र करिष्यन् भवति तचैतत्सौहविष मभ्यस्तगोत्यतिरिक्त ...

प्रजातिकाम-*-यज्ञ उत्तरत्र यो द्वादिकार: प्रजातिकाम-†-यज्ञत्वात् स भवति व्याख्याता उत्तरे ‡ अथैत एकस्तोमा एतान् कामानभ्युपक्षता यथैतद् ब्राह्मण मथापोऽक्थ्योमान्याहीनिकान्यहानि सोऽन्तन्याय मदिदर्शयिषोषतत् खलु बृहद्रथन्तरपृष्ठान् कुर्मो रथन्तरवार्हता च्छेते स्तोमा इति ज्योतिष्टोमं तच्चं ज्योतिषा च्छेते स्तोमा इति तत्रानुपृष्ठं दृवा- गमः षोडश्याः षोडशिनो ऽनुब्राह्मणं वेति विचार- यन्ति किंस्तोमा अनुब्राह्मणं त्युरित्येकविंश- स्तोमा इत्येष एषां प्रकृतिस्तोमो भवत्यथाप्याहुरह- स्तोम सहः प्रथमोत्तमयो रन्विययाता मेकविंशं तु पञ्चदशञ्च कुर्यात् पञ्चदशं सप्तदशश्चैवं तं स्तोमं संस्तुतो ऽतिरात्रः सम्पद्यते यो यत्तस्याङ्गो भवत्यह- स्तोमं स्वेवान्विगु रित्यनुब्राह्मण मित्यनुवूाह मित्ये- तत् स्याद्यो वा ह्यङ्गः स्तोमः स षोडशिनो न्यायेन यो वा क्रतीयादितरोहस्तोमं चैन मनुवर्त्तम्भ्यासो ऽयातो ऽतिरात्रश्च ज्योतिष्टोमसर्वस्तोमौ समस्यति मा विलोपे भूयान् विलोपो ऽभूदिति च दाशरात्रि-

---

*, † "प्रजापतिकाम" —इति ख।

‡ ख पुस्तके अत्रैव द्वितीयखण्डः समाप्तः ।

कार्यां न द्वे करोत्यथैतानि दशरात्रस्यान्ताहानि चतुर्थ-षष्ठे नवम-दशमे इत्येतेषां द्वयाण्यहीनान्तेषु चिकीर्षितानि तत्रोत्तरच वहिष्पवमान मन्यत् प्रतिपदो नावमिकम् ॥ ३ ॥

अथैते हाविष्मत-हाविष्कृते हाविष्कृतं पूर्वस्याह्न आर्भवचरए स्थानापन्नं भवति द्वितीयस्थानं च हाविष्मत मुत्तरस्य माध्यन्दिने सएहितस्य भागविलोपे भागसन्तानाय निकामयते ऽपि चैवए सती नेदीयसी हाविष्मत-हाविष्कृते भवत इति जनुपैकर्चा वहर्गणन्यायेन चैशोक-वैखानसे जागतस्य भागस्यानुग्रहायाहीनान्तेष्वर्काश्चिकीर्षिताः सएरोधान्विह दीर्घतमसोऽर्को विपर्ययेणेतरयोरग्निः स यदेतास्वेवासु स्वयोनि रथाप्येता धृतवत्यो दधितवत्यो ऽन्तेऽभिरूपा इति ज्योतिष्टोमान्युक्थान्यहीनान्तेषु चिकीर्षितान्येवं पथ्यावसान मित्यायुप मुत्तरस्य द्वितीयं करोत्येते समायास्त्रिकद्रुका इति वृहत्पृष्ठं वार्हतं तत्वं द्वितीयए हि स्थान मापन्ना इत्युद्धरत्यन्वलक्षणानि त्रिणव-त्रयस्त्रिएशयो रन्वपाय मुत्सेधनिषेधौ परिस्थाना मिति जराबोधीय महीनेषु चिकीर्षित मेतच्छन्दोमसामेति तद्य दुष्णिहि

प्रजातिकाम-*-यज्ञ उत्तरश्चन यो द्रव्यविकारः प्रजातिकाम †-यज्ञत्वात् स भवति व्याख्याता उत्तरे ‡ अथैत एकस्तोमा एतान् कामानभ्युपक्लृता यथैतद् ब्राह्मण मथापैकस्तोमान्याहीनिकान्यहानि सोऽन्तन्याय मदिदर्शयिषीतत् खलु बृहद्रथन्तरपृष्ठान् कुर्मो रथन्तरवार्हता क्लृप्ते स्तोमा इति ज्योतिष्टोमं तन्चं ज्योतिषा क्लृप्ते स्तोमा इति तत्रानुपृष्ठं द्रव्या-गमः षोडश्याः षोडशिनो ऽनुब्राह्मणं वेति विचार-यन्ति कि०स्तोमा अनुब्राह्मण० खल्विस्येकविंश-स्तोमा इत्येष एषा प्रकृतिस्तोमो भवत्यथाप्याहरह-स्तोम सह: प्रथमोत्तमयो रन्वियाता सेकविंशं तु पञ्चदशया कुर्यात् पञ्चदश० सप्तदशश्चैवं त० स्तोम० स०स्तुतो ऽतिरात्रः सम्पद्यते यो यस्तस्याङ्गो भवत्यह-स्तोमं स्वेवान्विय रित्यनुब्राह्मण मित्यनुब्रूह मित्ये-तत् खाद्या वा ह्यङ्गः स्तोमः स षोडशिनो न्यायेन यो वा कुसीयादितरस्तोमं चैन मनुयन्तम्पश्यामो ऽथातो द्विरात्रावन ज्योतिष्टोमसर्वस्तोमौ समस्यति मा विलोपो भूयात् विलोपो ऽभूदिति च द्वारात्रि-

*, † प्रजापतिकाम —इति ख।

‡ च पुस्तके सर्वत्र द्वितीयखण्ड समाप्त।

कार्यां न द्वे करोत्यथैतानि दशरात्रप्राप्ताहानि चतुर्थ-षष्ठे नवम-दशमे इत्यथैतेषां द्वयाख्यहीनान्तेषु चिकीर्षितानि तत्रोत्तरच वहिष्पवमान मन्यत् प्रतिपदो नावमिकम् ॥ ३ ॥

अथैते हाविष्मत-हाविष्कृते हाविष्कृतं पूर्वस्याह्न आर्भवचरं स्थानापन्नं भवति द्वितीयस्थानं च हाविष्मत मुत्तरस्य माध्यन्दिने संहितञ्च भागविलोपे भागसन्तानाय निकामयते ऽपि चैवं सती नेदीयसी हाविष्मत-हाविष्कृते भवत इति जनुपेक्षर्चा अहर्गणन्यायेन वैशोक-वैखानसे जागतस्य भागस्यानुपहायाहीनान्तेष्वक्षास्विकीर्षिताः संरोधान्विह दीर्घतमसोऽर्क्कौ विपर्ययेणेतरयोराशिः स यदेतास्वेवासु स्वयोनि रथाप्येता धृतवत्यौ दधितवत्यौ ऽन्तेऽभिरूपा इति ज्योतिष्टोमान्युक्थान्यहीनान्तेषु चिकीर्षितान्येवं पध्यावसान मित्यायुष मुत्तरस्य द्वितीयं करोत्येते सप्रायाश्विकद्रुका इति बृहत्पृष्ठे वार्हतं तत्वं द्वितीयं हि स्थान मापन्ना इत्युद्धरत्यन्तलक्षणानि त्रिणव-त्रयस्त्रिंशयो रन्वपाय मुत्सेधनिषेधौ परिस्थाना मिति जराबोधीय महीनेषु चिकीर्षित मेतच्छन्दोमसामेति तद्य दुष्प्रिहि

राथन्तरारसोमाच्छ्य मविच्छावयियोद्दद्दएशीयं ते-रश्चां वेति विचारयन्ति पूर्वस्याह्न उक्थान्त इत्यश्लोदएशीय मुपक्रमणीय मह्नरिति तैरश्चा मषोडशिका रात्निस्तोमन्नाचेणाषोडशिका स्त्वेवयुर्भवतीति त्रिवृत् पञ्चदशो ऽग्निष्टोम उत्तरस्य पूर्व एकसोमता मिवाह्नोर्दिदर्शयिषन्नायुषा प्रच्युतं पञ्चदशं पूर्वस्मिन्नहन्यनुगृह्णाति तत्र यदेतत् सद्धचो ऽभवदिति कपिवनो भायजात्यस्तातूराचाय जामदग्नये द्विरीचे ब्रह्मचारिणए सम्पन्नकुलीन मपः प्रह्नत्य तस्य त्रिवृत् पञ्चदश मह रूपेतं बभूवाथेतरस्त मर्थए साधयित्वा प्रत्यानगाम समाय मिम महर्यागं निशीशमतेत्यायुरतिरात्र मुपदधौ ब्रह्मचारिणश्च परिहारेण यत्न प्रत्यवहारेण च रूचो बभूव यस्त्वेतौ दोषौ परिहरेन्न रूचः स्यादिति पूर्वेणैव द्रव्यकल्पो व्याख्यातो व्याख्यातः ॥ ४ ॥

अथातस्त्रिरात्रास्तत्र वामदेव्यं तृतीये पृष्ठे करोति लोकविधां त्रिरात्र उपक्लृत एतानि लोके सामानीति तानि कुशलं यद्यथाभक्ति निदधाति तन्त्रेषु विप्रतिपद्यन्त आहीनिकतन्त्राणीति गौतमस्त्वङ्गायनीभिर्विजानीम एकैवात्राहीनिकी भव-

त्यथ प्रवेति तां यत्करोति सहस्रवती सहस्रवत् तद-
भिरूपेत्येकाहिकानीति धानञ्जय्यस्तद् गायत्रीभि-
रेव जानीम एकैवात्राहीनिकी भवति प्र सोमासो
विपश्चित इति तां यत्करोति प्रवत्युपक्रमे ऽभिरूपे-
त्यहरहरेवाहीनैकाहाभ्यां वर्त्तेत इति शाण्डिल्या-
यन एवं युक्ता एता गायत्र्यो भवन्तीत्यथ खल्वेव भाग-
विपर्ययो भवति लोकविधां चिरात्र उपक्लृप्तस्तं यथा-
भक्त्या चिकीर्षीत्त एते परे अहनी भागविपर्ययाद्
द्रव्यसमासेन वर्त्तते द्वितीये ऽहन्यानि द्वैतीय-
कानि भागान्वितानि तार्त्तीयिकान्येतदेव विप-
रीतं तृतीये खल्वेव द्वयान्यक्षररूपाणि क्रियन्ते प्रजा-
पतेश्च वागक्षराक्षराणि चाज्यादिषु प्रजापतेर्वाग-
क्षराणि यथोपलम्भ महस्वक्षराक्षराण्येकाक्षरणि-
धनं यौधाजय मेव आचार्यसमयो ऽथाप्याह यदा-
क्षाराणि प्रथम मह्नभजन्त इति व्याख्याता अर्का-
स्तथाज्यदोहानि पूर्वावर्कौ व्यत्यस्य चाक्षरणिधनं
प्रथमे ऽहनि चिकीर्षन्नाज्यदोहानां प्रथमं तृतीय एव
मिव ब्राह्मणं भवत्यथाप्येषा मेतत् त्रिणिधनं तृतीये
ऽभिरूप मनु प्रथमस्य करोत्यचैव सन्तानार्थं मिदं
भवति द्व्यक्षरणिधनत्वादनुष्टुप्छन्दस मितरयो रैड

मन्त्यं करोतीडानुग्रहो जगतीं वा स्वेन सामान्ते-
नापिपादयिषीत् ॥ ५ ॥

उपवती द्वितीयस्य प्रतिपन्नवमाक्षरागान्विता कया
ते अग्ने अङ्गिरस इति होतुराज्यं कीति तृतीय मिति
हि भवतीत्यथाप्याह यत्सामा स्तोमो भवति तदा-
ज्येषु निराहेति ता एताः कवत्यो यथा, वामदेव्यर्चौ
दाशराचिकाण्युत्तराणि सन्तनीति स्वयोनीति होतृ-
कपृष्ठान्येतानि छन्दोमत्र्यहे प्रायश्चित्तार्थे गायत्र-
पार्श्वं मैत्रावरुणसामैतद् वामदेव्यसदृशं तत् खलु
बृहतीषु करोति त्रिस्थानां बृहतीं पृष्ठेषु चिकीर्षन्न-
धाप्यस्मिन् नवाक्षराक्षरं भवति ककारषकारादि
रकारः सन्वनि ब्रह्मसामास्तावि मन्म पूर्व्यं मित्येता
ब्रह्मप्रवादा इति सन्तन्यच्छावाकसाम नवमाक्षरागा-
न्वित मथ खल्वच जामि भवति लोकविधां त्रिरात्र
उपाकृतः सम्भिन्न माभ्यां लोकाभ्या मन्तरिक्ष मिति
पाञ्चमिकीं ककुभं करोत्येतस्या मक्षरं भवति ककार-
षकारादि रकारः पिपीलिकमध्यां करोति वागुन्नो
ऽयं त्रिरात्रस्तत्रोभा वाकारा ऽनुष्टुभा मचिकीर्षीन्नाव-
मिकी रुत्तरा अक्षरसमासो हि तार्त्तीयिकीषु तासां
मध्यमा मुद्धरति दशरात्रलिङ्गेति तन्नैतां करोति तए

सखायः पुरूरुच मित्येषा सखिमती यथा वामदेव्यस्य-
र्चेस्ता यदावर्त्तयति परिवत्या प्रक्रमं परिजिहीर्षेन्
नानाऽग्निष्टोमसामानि नानात्वार्थो नानाच्छन्दस्त्वा-
वृत्तेष्वेवं भूयो नानात्व मिति स यदिहानुष्टुभः
करोति वृहतीः क्लत्वानुष्टुभा चो भवति * तचैतद्विशो-
विशीयं स्वयोन्यापन्नं पुरस्तादेतत्स्थानं वाक्प्रवादो
ऽत्र भवति भागाग्वितान्युक्थानि होता देवो ग्रमर्त्य
इति तृतीयस्य होतुराज्यं हो इति तृतीय मिति
हि भवतीति गौपूक्तं प्रायश्चित्तिसामैतस्मिन्नघरा-
घरं भवति रेफादि रकारः सतोवृहतीं करोति
त्रिपदा त्रिराचे ऽभिरूपेति सवासाहीयं मैत्रावरुण-
सामैतद् वामदेव्यसदृश मपुरस्तात् स्तोभं वहिः-
स्वारं यथा वामदेव्यं वारवन्तीय मग्निष्टोमसामै-
तद्गायत्रीसामापन्नं पुरस्ता देतत्स्थानं वाक्प्रवादो
ऽत्र भवति वागुक्तोऽयं त्रिराचो ऽपि वानुष्टुभोपपत्त्या
वाक्प्रवादेनानुग्रहो भविष्यतीत्यक्षरविक्रमे ऽयं त्रिरा-
चोऽपि वानुष्टुभोपपत्त्या अक्षरप्रवादेनानुग्रहो भवि-
ष्यतीति विद्वानविद्वानिति तु भवन्ति नाना साधु त्वं
त्रिरात्रस्तच नानर्त्विजो ऽचिकीर्षेत् कथ मविद्वा-

* "क्लत्वानुष्टुभो वैति"—इति ख।

विकारा भवन्तीत्यपरं प्राकृतस्यैवाश्वमेधस्य प्रतीया-
दित्यथापि ते नानास्तोमा एकस्तोमो यत्र भवति
तत्र स्वतन्त्रा एकाहाः स्युरित्येके बहुवेकाहानाए
स्वातन्त्र्यं दृश्यते यथायुष्कामे षड्रात्रे नवरात्रयो
रिति त्रिरात्रतन्त्रा इत्यपर मेवं च तन्त्राविशेषे
ऽपि चैषां ऽहीनन्याय इत्यपोडशके गोश्चायुषी इत्यपर
मेवं दृष्टे चापि चैवं प्रदेशो भवतीत्यथैष वैदत्रिरात्र-
स्तस्य त्रिवृत्स्तोमाः स्युः षोडशिन उत्तमस्यातिरात्रस्य
षोडशं प्रथमए रात्रिषामेवं तावत् स्तोमो यथा-
त्रिरात्रो नाना षोडशिसामानि नानात्वार्थो नानदं
प्रथम उद्एशीयं द्वितीय एतदानुष्टुभए हरिवद्योनि
यथा गौरीवितं तस्य स्थाने तैरश्च मेतत् पूर्वाभ्याए
सप्रायं न्याय्य उत्तमे षोडश्यथैत उत्तर एतां कासा-
नभ्युपक्षता यथैतद् ब्राह्मणए स्तोमकारित आवापो
ऽन्त्वैवंसावप्रत्यवरूढान्युत्तमस्याह्न उक्थानि लोक-
विधां त्रिरात्र उपक्षतो रोहीपकारो ऽथाप्येव मवरा
हतए सवन मिति न्यायक्लृप्त उत्तरो न्यायक्लृप्त
उत्तरः ॥ ८ ॥

अथैष चतुर्वीरो बृहद्रथन्तरपृष्ठ एव न हि षाड-
ह्विकान्यनुभवन्ति नान्यो वालुलुपसीत् तें यन्नाना-

छन्दःसु ब्राह्मणेनैव तद्व्याख्यातं कानि तन्त्राणीति चतुरहतन्त्राणीति गौतमस्तद्विजानीमश्चतुर्थे ऽहनि चतुर्थप्रतिपद् मादिशेकाहतन्त्राद्यानि मुपजिगमिषन्नस्य प्रत्नां करोतीति चौण्डाहीनिकान्येक मेकैकाहिक मिति धानञ्जय्य एवं पर्वणाहीनस्यादान मेकाहतन्त्राद्यावे स्यायः स यदेतदेतत्तन्त्रान्तरम् स्तोमकारित आवाप उद्धरति जनुपेकर्वौ स्तोमकल्पार्थस्तत्र ज्योतिष्टोम्यौ करोति तयोः स्थाने नावमिक्यौ नानात्वार्थौ ऽथ यत्र षडहो भवति साप्तमिकौ तत्र ककुभं करोत्यसञ्चाराय तत्र खलु पदस्तोभान् करोति चतुरोऽयं वीरानुपक्कतस्त एते चत्वारः समानयोनयः समानार्षेयाः पुत्रामधेया गणनामधेया गणेडा गणनिधना अपि वा चातुर्विध्यादेव क्रियेरंस्ताएस्तु यदेवं प्रयुक्त एव सिद्धान्तो रोहोऽपि चैवं दाशराविको ऽवसानो भवतीति तान् खल्वन्त्याम् करोत्यन्त्येषाम् स्वं छन्द इति तान् कुशलं यन्निन्यास्तु धर्त्ता दिव इत्युत्तम एतासु स्वयोनि रध्यायेता अन्तलक्षणैः सम्पन्ना इति व्याख्याता अर्कासेषां तदेवानुपूर्व्यं यत् त्रिरात्रे गौषूक्तं प्रायश्चित्तिसाम पदस्तोभवाध मर्कं द्विपदास्वनुगृह्णाति तेन प्रच्युतं वारवन्तीय मुष्णिग्घ्नत्साम

साप्रच्चोष्टेति विपरिहरत्यानुष्टुभे अजाम्यर्थं एतेनैवो-
त्तरे व्याख्याता उद्धरति पदस्तोभान्न स्तोते चतुरो
वीरानुपक्रतास्तत्र कुशलं यन्नित्यादिपदस्तोभापाया-
दर्कः खण्. स्थानण् समापद्यते तस्यानुसमापत्तिण्
सुध्ववारवन्तीये समापद्येते. अतो यो द्रव्यविकारः
स्तोभकारितः स भवति ॥ ८ ॥

अथ खल्वाह वसिष्ठस्य जनित्रे भवत इति कस्येदं
ब्राह्मणण् स्यादिति बृहद्रथन्तरयो रविप्रयोगस्येत्याहु
रेते विश्वोवसीयसी आजनित्रे भवत इत्यपि वा
रथन्तरस्येव द्वियोगस्यैतद्धि वासिष्ठ मित्यपि वा रथ-
न्तरस्य द्ववतश्च वासिष्ठस्यैते वासिष्ठे भवत इति
जनित्रे एवानुकल्पयेदिति कौत्सो जनित्रे भवत
इति सति किमन्य दनुकल्पनान्न त्वेवानुकल्पयेन्न
स्तोते आनवकाश्यान्ननुकल्पयतोऽस्येतेषां त्वेव विचा-
राणा मेकस्यैतद् ब्राह्मणण् स्यादेकस्तोमता मिवाङ्गां
दिदर्शयिषन्नुत्तमे भागस्तोमान् करोत्येते प्राप्न-
स्थाना इति पञ्चरात्रस्य चतूरात्रेणैव पृष्ठवादो
व्याख्यातस्ते खलु स्वासु करोति न ह्ययं चतुरो
वीरानकर्तो ऽथापि नानाभागश्चतूरात्रो ऽथेह समान-
भागे चतुर्थपञ्चमे इति कानि तन्त्राणीति पञ्चाह-

तन्त्राणीति गौतमस्त्वचतूरात्रेणैव व्याख्यातं चत्वार्यहीनिकान्येक मैकाहिक मिति धानञ्जय्यस्तेनैव व्याख्यात मग्निष्टोमः प्रथम मह रुक्थानि मध्ये दशरात्रन्यायेन यत्र सᳪस्थाभिप्रयुज्यत एषा ऽभिप्रयुज्यत उद्धरति षोडशिनं चतुर्थाहिराजा मन्वपायᳪ स्वराजोपेयु स्तोमश्च वा लोभादथाप्येन मतिरात्रे करिष्यन् भवति तन्न समवैविचारयिषीदुद्धरत्यातीयाद्वीयं धर्मिणि तत्पुरा षडहे धर्मिः भवति तत्र यायान्तर्यात् क्रोशं प्रत्याहरत्यपि वा शुष्वेन प्रच्युत मिहानुगृह्णाति तद्भ भवत्यूर्द्ध्वं बार्हते ऽहनीति स्तोमकारित आवाप एतेनैवोत्तरो व्याख्यातः स्तोमकारित उद्वारः सप्तदशं षोडशिनं करोति यो वा श्वः स्तोमं स षोडशिनो न्यायेन यो वाक्रि भक्तिरेव मुत्पन्नो हि भवत्यथाप्यनादिष्टव्यूहेन भवत्यथा कथ महीनाङ्गो रात्रेरितीति कसीयानित्यह स्तोमं स्वे त मनु यत्त पश्यामो ऽथाप्याह सप्तदशᳪ स्तोमानातियन्ती व्रतानि मुत्तर मुपक्रत स खल्वेकाहा क्लृप्तास्ते व्याख्याता ॥ १० ॥

ऋतुषडहे कथᳪ रात्रिरित्यकर्त्तवेति गौचिपृच्छिरेव मुत्पन्नो हि भवत्यथाप्यनादिष्टा वृहेन भव-

त्यथापि कथ मही नाह्नो रात्रेरुपायो ऽभविष्यदित्य-
थापि कृत्स्नतायै वै नून मिह रात्रिः क्रियेत कृत्स्नो-
ऽयं षडह इत्यथापोथ चतुर्थो भागो रात्रेः कृत्ये तत्
कृत्स्नो ऽयं षडह इत्यथापोथ चतुर्थो भागो रात्रेः प्रत्य-
र्द्धिता मत्यक्रमिषादिति कर्त्तवोति गौतम आदिष्टा
कल्पेन भवत्यथापोप्राचीनसएस्त्रा यद्रात्रिस्ता मव-
सानभूतां पष्ठ महरागच्छतीत्यथापोथो ऽहीनन्यायः
सर्वे ते रात्रिमतो ऽथाप्यरात्रिकं व्रतं तस्मान्वे निपा-
ताद्रात्रि मुपधीयमानां पश्यामो यथा सप्तरात्रेष्व-
थापि यः पृष्ठावलम्बनस्य पञ्चमादनादेशाद्रात्रि
मुपनयेद्यथायायाद्रात्यपायाच्च स्तोमप्रत्यवरोहो ऽपि
सोऽर्थागमाद्रात्रिं प्रत्येतु मर्हतीति यदेतदेव मुत्पन्न
इत्यनन्ते वै तत्र भवत्यन्तदर्शना रत्रिरिति यदेतद-
नादिष्टव्यूहेनेति नित्यत्वान् नून मेनानाद्रियतीति
यदेतत् कथ मही नाह्न इति कथं वा अप्रातिरात्रिको
ऽभविष्यदिति पश्यामथाहीनिकेभ्यस्त्र्येभ्यो रात्रे-
रुपायं यथा त्रिरात्रेषु यदेतत् कृत्स्नो ऽयं षडह
इति कृत्स्नो हैव षडहो रात्र्या तु कृत्स्नतरो भवि-
ष्यतीति यदेतदत्यक्रमिष्यदित्यपह एवाभिक्रान्तो
भवत्यतिक्रामन्तं च पश्यामो यथाप्तोर्यामे गौरीविता

मायात् पृथक् स्वाराणि स्तोत्राणि करोति नाना साधुरहीन इति स यद्देतान्येतानि रूपसम्पन्नानीति ॥ ११ ॥

आयुष्कामयज्ञ उत्तरस्तत्र त्र्यहौ समस्य निदधात्यहीनत्र्यहं चैकाहत्र्यहञ्च कस्य हेतो रिति त्रयः प्राणापानव्याना इत्यऽग्निष्टोमसंस्थं ज्योतिष मेपास्य प्राकृती संस्था ऽधाय्येतया संस्थया चरत्यथा ऽपि नानात्र्ययाविमौ त्र्यहौ तानुपक्रमसंस्थया प्राचिक्रमिषोद्षोडशिका रात्रिः स्तोमस्त्रात्रिणाषोडशिको ह्येवायुर्भवतीति द्वितीयस्याह्नो वासिष्ठं माध्यन्दिनात्ययं स्यादिति शाण्डिल्यः पृष्ठार्थेनेदं पुरा प्रच्यवते नेह पृष्ठार्थ इति पार्थ मेवेति गौतम एतत् समूढसाम समूढावच्छेदोऽयं भवतीति तृतीयस्यानुष्टुभि बृहत् करोति त्र्यहे समं बृहद्रथन्तरे युयुक्षमाणो साम्यर्थं चैव स्यात् पृष्ठावलम्ब उत्तरस्य पञ्चाहो बृहद्रथन्तरपृष्ठ एव विश्वजिति हि पृष्ठानि करिष्यन् भवत्युद्धरति षोडशिनं चतुर्थात् तत् पञ्चरात्रेणैव व्याख्यातं त्रयस्त्रिंशानि पञ्चमस्याह्न उक्थानि रात्रिकारितो हि स्तोमप्रत्यवरोहस्तान् विश्वजिति करिष्यन् भवति भवति ॥ १२ ॥

अथातः सप्तरात्रास्तत्र पृष्ठ्यं वृत' सप्तम' करोत्ये-
तदुक्तं पृष्ठं भवत्यथाप्यनङ्ग मेतद् वृतस्य यदुक्थानि
तत् ज्यौतिष्टोमानि स्वस्तोमान्याहरति षोड़शि-
मती रात्रि रहीनन्यायेनाथाप्यनङ्ग मेतद् वृतस्य
यद्रात्रिस्तत्र येव कृत्स्नतमा रात्रिस्तमो हरतीति
सप्तदश मुत्तरस्य वृतए स्तोमकारित उद्दार स्तस्य
स्तोमान्वयीतुक्थानीति किए स्तोमानि स्युरित्येकः
विएशस्तोमानीति गौतम एष एषां प्रकृतिस्तोमो (न)
भवति त मन्वियुरित्येतत् स्यात् सप्तदशस्तोमानीति
धानञ्जय्य एषोऽस्य वृतस्य स्तोमो भवति त मन्वियु-
रित्येतस्यात् पञ्चविएशस्तोमानीति शौचिवृत्तिरेष
वृतस्य प्रकृतिस्तोमो भवति त मन्वियु रित्येतस्या-
दथाप्येवं तासाए स्तोत्रीयाणा मनुग्रहो भवति याः
पञ्चविएशाद् वृतात् सप्तदशे क्रियमाणे ऽपयन्ति
द्विपदास्तोत्रीयेनानुगृह्येते ते चेदनुनिघृषेत् त्रिणवं
प्रथम मुक्थं कुर्यादेकविएशं षोडशिन' करोत्येषो
ऽस्य प्रकृतिस्तोमो भवत्यथाप्येवं तासां स्तोत्रीयाणा

रन्तवो: सामोर्यावान्तर्यात् पूर्वं मादत्ते ऽथापेतरथा-
मिकृतं निधनं भवत्यविकारः पूर्वो ऽविकारादित्येक-
विंशान्नुकृत्यान्येकविंशस्तोमए षोडशिनं करोति
तद् व्याख्यातं प्रथमे सप्तराचे ऽभ्यास उक्त उत्तरस्य
त्र्यहस्य बृहद्रथन्तरपृष्ठस्य तुर्यस्याह्न एकविंशः षोडशी
पञ्चमस्याह्नः पार्थस्य लोक आकूपारं वाचेयं वेति
विचारयन्ति नानापुरुषकल्पौ खाला मिति ह स्माह
मानद्वयो ऽत्र एवाकूपार मरोचयिष्यतान्य आचेय
मावेदं येनाभिरूपतरं पञ्चमे ऽहनि स्थानसम्मितं
पञ्चमनाला यत्र इति चतुर्थस्याह्नः शुद्धाशुद्धीयस्य
लोक आकूपारं पञ्चमस्याह्नः पार्थस्याचेयं पार्थं चैव
सित मह. पार्थं व्याख्यात माचेयं नु खलु कुर्वत
रक्षोरनुवशो भवति दूने हि पार्थं करिष्यन् भवति
चतुर्विंशं वर्धिष्यमानए सप्तदशस्तोमं वृतं करोति
तत्र न एवोक्तयानाए स्तोमं विचारयेत् सप्तदशे
तुतं ॥ ११ ॥

॥ इति निदानसूत्रे षष्टमः प्रपाठकः ॥

—

## ॥ अथ नवमः प्रपाठकः ॥

प्रतिष्ठाकामयज्ञ उत्तरः स खल्वेकाहस्ते व्याख्याता जनकसप्तरात्रे चत्वार्याहीनिकान्यहान्याहीनिकतन्त्राण्यनन्तरवा दुहरति षोडशिनं चतुर्थात्तद् व्याख्यातं व्याख्याता अर्कास्तेषां तदेवानुपूर्व्यं यत् त्रिरात्रे धर्त्ता दिव इत्युत्तम एतासु स्वयोनिद्वितीयस्याह्नः सौभर मुक्थानां ब्रह्मसाम कुर्यादिति धानञ्जय्यस्त्वेककुभं हि चतुर्थे करिष्यन् भवत्यौपगव मेवेति गौतमो ऽतिरात्रे सौभरं करिष्यन् भवत्येव मुभयो रनुग्रह इति षोडशिमतौ रात्रि रहीनन्यायेनात्रैव चतुष्टोमः षोडशिमानिति शौचिवृक्षिः शम्बूपुत्रो नात्र च नेति राणायनीपुत्रः पृष्ठाः स्तोम उत्तरस्य षडहो बृहद्रथन्तरपृष्ठ एव विश्वजिति हि पृष्ठानि करिष्यन् भवति चतुर्थस्याह्नः प्रत्यस्मै पिपीषत इति गौरीवितं षोडशिसाम विराजा मन्वपायं स्वराजोपेयुः पृष्ठापायाद्धेत्योपयन्ति तत्रैतद्वाढं च्युत मेतद्गायत्रीसामैककारवत् पश्विधनं यथा रैवत्यो विपरिहरे दौच्चणोरन्ध्रे इति गौतम एव मिडारम्भयोर्बृहतीति न विपरिहरे दिति धानञ्जय्यो ऽपि ह्येव मजामि स किमर्थो नित्यं काल्यं

व्यावयेदित्यष्टरात्रस्याषोडशिका रात्रिस्यातुष्टोमन्या-येनाथापि क्षतः षडहे षोडशीतरायुष्कामयज्ञ उत्तरः स यन्नवरात्रो नव प्राणा इति त्रिकद्रुकानुपदधाति छन्दोमसादृश्यादथाप्येत ऊनस्य पूरयितारो षोड-शिका रात्रिः स्तोमस्याचेणाषोडशिको ह्येवायुर्भव-तीति पशुकामयज्ञ उत्तरस्तत्र . पञ्चाहं करोति पाङ्क्ताः पशव इति यद् विश्वजितं पशूक्तानि पृष्ठा-नीति त्रिकद्रुकानुपदधाति छन्दोमसादृश्यादथाप्येत ऊनस्य पूरयितारस्तान् पुरस्तात् पञ्चाहस्य करोति विश्वजितं हि रात्र्यपायाय करिष्यन् भवत्यायुषो ऽनुष्टुभि बृहत्करोति त्र्यहे समं बृहद्रथन्तरे युयुच्च-माणो ऽजाम्यर्थं वैव स्यादार्कजम्भं वेति विचारय-त्यथापि नैताः स्वतन्त्राः स्तोमविधां बृहदा-पद्यते तत्राकूपारं त्वचसमाप्तये तदेतन्नवमाङ्गा-गान्वितम् ॥ १ ॥

अथैष दशरात्रो बृहद्रथन्तरपृष्ठ एव तत्र खलु विश्वजितं दशमं करोति स खलु विश्वजित् क्रिय-माणो दशमतन्त्रं प्रत्यूहति तत् प्रत्यूह्यमानं पूर्वे तन्त्रे प्रत्यूहत्यत्र यदेवैकं पुरा सप्तमे क्षतं तन्त्रं भवति तत्सच्यवते ऽथैते षष्ठ-नवमयोस्तन्त्रे व्यत्यस्यति षोड-

शाह्निकैरयं स्तोमैरभि विधीयते स त्रयस्त्रिंशं स्तत्त्व मचिकीर्षीत् तद्येतरस्थानं परीतं भवत्यत्र खल्वयं सर्वो दशरात्रो नानातन्त्रो भवति समूहति वार्हद्रथन्तरपृष्ठाग्नित्याभिरनित्यो ह माचाया मक-रिष्यदनित्यो ह्ययं दशरात्र इति नित्यासु चतुर्थ-पञ्चमयोर्जगत्यो याश्चतुर्थे नित्याः सप्तमे ऽहनि ताः करिष्यन् भवत्यतो नित्याः करोति तद्दशेन पञ्चमे कुशलं यदनित्यास्त्रिष्टुभो नित्यानित्या एवा-चिकीर्षी द्व्यिपरं नित्ये ह तन्त्रे अनित्यौ स्तौमौ यत्र नित्यानित्या अभिरूपा यद् पृष्ठ उभयोरनित्या उभयं ह्येव तत्रानित्यं स्तोमस्यैव तन्त्रञ्च नित्यास्तु परयोरक्षोर्नित्याभिर्ज्योतस्य द्वाहस्य समूढो नित्योऽस्तु नवमे ऽन्तर्विधा हि दाशमिक्यो विश्वजित्यन्तर्विधाः करिष्यन् भवति तत्र कुशलं यज्ज्योतिष्टोम्यौ करोति तन्त्रान्विते च पृष्ठान्विते चाथ खलु दीर्घतमसोऽर्कं सप्तमे ऽहनि करिष्यन् भवत्यन्तसामान्त इति तन्त्रस्थः स्वशिरामर्कः सप्तमे त्रय एवैको ऽग्नेरर्क-स्तन्त्रापेतस्तन्नवम महद्दरति ॥ २ ॥

१ अथ द्रव्यसमुद्देशो यानि यथास्थानं व्याख्या-तानि तानि यान्ययथास्थानं तैरेवाष्टभिः पर्याये-

स्तेषा मन्वयए समन्वीचेत नाना ब्रह्मसामानि नाना-
त्वार्थः श्येतनौधसवर्णानि वार्हद्रथन्तरपृष्ठान् नाना-
ऽग्निष्टोमसामानि नानात्वार्थं ऐडानि भूयिष्ठानि
करोति सामान्तश्च स्थानं तत्सामान्त मथाप्येष तृतीय-
सवनसामान्तस्त मदिदर्शयिषोन्नानाच्छन्दस्त्वेवं भूयो
नानात्व मिति तानीमानि भवन्ति सप्तच्छन्दाएंसि
नवाह' नानु भवन्ति तत्र ककुभं च विराजञ्चोप-
प्रयुङ्क्ते सा प्राव्यात्तानि कुशलं .यद्वोहेण प्रयुङ्क्ते ऽग्न
आयूएंषि पवस इति प्रथमे ऽहनि करोति कस्य हेतो
रिति शिशुः सद्योत्तोऽयं भवति सैषाग्नेयी पविता
ऽभिव्याहारा शुद्धार्थेऽभिरूपा ऽथापि ग्रब्वदिष्टाग्नि-
ष्टुतं तैत्तिरीया अधीयते सैषाग्निष्टुदनुग्रहाय स्यात्
स्वादिष्ठा मार्भवीया मेषा स्वादुमती पठिताभिव्या-
हारा शुद्धार्थे ऽभिरूपाथापैत्रकाहिकी भवत्यथ खल्वत्र
पौष्कलं भवति शुद्धास्त्वेतद्भवति यत् पुष्कल मित्यथा-
पैत्रकाहिक मेकाहसमासए ग्रब्वदिह तैत्तिरीया
अधीयते नाना मध्ये-निधनानि न दाशराचि-
कानि मध्ये-निधनान्यनुभवन्त्यतश्छन्दस्यान्युपप्रयुङ्क्ते
आ सोम स्वानो अद्रिभिरिति तृतीयस्य बृहती सप्तदशे
साध्यासां करिष्य भवत्यत एतां करोत्येषा सामन्या

त्वचप्रथमा तृतीयस्थानेति वभवे ऽनु स्वतवस इति
षड्चए षष्ठ-सप्तमयोर्विहरति सत्वानार्थौ नवर्च
मेतस्य प्रथमे ऽहनि तृचं कृत मुपार्श्वे गायता नर
इति त्र्यचए सप्तमस्य समूढाज्य मेतत् स्थानसम्मितं
छन्दसो उत्तरयो रेते रूपसम्पन्ने इत्येते रूपसम्पन्ने
इति ॥ ३ ॥

अथैष कुसुरुविन्दस्तच खलु वृहद्रथन्तरे ते
करोति राथन्तरवार्हता ह्येते स्तोमा इति कानि
तन्त्राणीति दशरात्रस्तोमविकृत इत्येके द्वैपृष्ठ्याद् द्वे
तन्त्रे स्याता मित्याचार्याः प्रथमद्वितीययोरिति शौचि-
वृक्षिरते आहीनिके इति तदिदं प्रथमतन्त्रं प्रवतीभिः
कॢप्त मपरूप मन्यचोपक्रमाद् वारयशिष्यएस्तु भवति
तस्य स्थाने ज्योतिष्टोमं करोति प्रथमस्य प्रथमए राथ-
न्तरस्य राथन्तर मित्यैकाहिके इति धानञ्जय्य एव
मपर्वविलोप इति तन्विदं गोस्तंच मन्तविधाभिः कॢप्त
मपरूप मन्यचान्ताद्वार्यशिष्यएस्तु भवति तस्य स्थाने
द्वितीयतन्त्रं करोति द्वितीयस्य द्वितीयं वार्हतस्य वार्हत
मिति स खलु दशमे-ऽहनि द्वितीयतंच सुवृत्य तस्य
स्थाने ज्योतिष्टोमं करोत्यैकाहतन्त्राद्गाणि सुपाजि-
गमिषन्नुनो द्रव्यागमः समेषु सोमेषूभयोस्तंत्रयोः

पुनानां वृहतीं करोत्युभयोर्ह्येषा निरयेत्युष्णिक्ककुभी वा अपि समाने भवत इत्यपरं हिराचन्याय द्वेह भवति द्वैतन्चेण द्वैपृष्ठ्येन तच द्वैराचिका उष्णिक्ककुभः करोत्यथ यत्र राथन्तरस्याङ्गस्तृचार्थी भवति तद्यथाऽस्मतुर्वीरे व्याख्यातं तथा तत्र भवति बार्हतेष्वहस्सु यौक्ताश्व-हाविष्मते अग्निष्टोमेषु हाविष्मत मौच उक्थ्येषु मौच मुक्थ्यासामेति विभक्तान्युक्थ्यानि राथन्तराणि राथन्तरेषु बार्हतानि बार्हतेषु तद्देवार्काणाऽं स्थानं यद्दृशराच्चि तयोः सच्गतयोर्बार्हतस्य कविमन्तं पर्यासं करोति कालेय मच्छावाकसामाभिप्लवन्यायेनैकविंशौ ऽतिराचौ य एकस्तोमाना मुक्तमस्तस्य स्तोमान्वयी षोडशीत्यविचार मेकविंशः ॥ ४ ॥

अथैष छन्दोमवान् वृहद्रथन्तरपृष्ठ एव तच खलु विश्वजितं दशमं करोति स खलु विश्वजित् क्रियमाणश्छन्दोमान् प्रत्यूहति ते प्रत्यूह्यमानाः षष्ठ मह्ः प्रच्यावयन्ति पृष्ठ्यावलम्बस्य पञ्चाहः प्रथमस्याह्नः प्रत्नवद् वहिष्पवमानं पञ्चमस्याह्नो ऽसृग्रत प्र वाजिन इत्यनुरूप इति शाण्डिल्यायन उपरिष्टादिमं नवर्चं मावर्त्तयिष्यन् भवति कथ मक्तस्या-

वर्त्तनं स्यादिति नवाहयोगा इमा भवन्तीति धानञ्जय्यः कथ मसमापयिष्यन्नवाहं नवाहयोगाः कुर्यादिति व्याख्यातः समूह्य एतावान् वैश्वानर मिति होतुराज्यं वैश्वानरीयस्य स्थाने वैश्वानरीयं त्रैककुभे उत्तरयोरेते रूपसम्पन्ने इत्युद्धरति काखरथन्तर मजामि हि भवति तच्चैतत् सोमसामैव मिडारम्भणा बृहतीति गौरीवितापायात् पृथक् स्वाराणि करोति नाना साधुरत्नोन इति स यदेतान्येतानि रूपसम्पन्नानीति प्रथम माचेयं नमसोपहरये तदु बृहद्योनि बार्हतं ऽहनीति स्थानसम्मिते उत्तरे इत्येते रूपसम्पन्ने इति स्वाराणि चैष्टुभानि माध्यन्दिनान्यान्येतानि रूपसम्पन्नानीतैडानि जागतान्यार्भवान्यानीडामन्त्रायो हि छन्दोमा इति स यदेतान्येतानि राथन्तरबार्हतेडानीति नवमे ऽहनि दीर्घतमसोऽर्कं मनुकल्पयन्त्येके ऽहर्व्याचेण स यदनुष्टुब्भ्येतदस्य समूढं वा न भवति तचाकूपारं त्वचसमाम्नयेऽथ येनानुकल्पयन्ति बृहत्यां वानुक्लृप्तं मन्यमाना यथा वैतदग्नेऽर्कः सप्तमे ऽहनि कृताकृत इति समापद्यन्ते दशमे ऽहनि सामानि समूह्यद्वाजजिद् द्विपदास्वनुगृह्णाति संयुक्त मेतेनाह्ना भवतीति ॥ ५ ॥

कथं दशममधर्मा मानस मिति कर्त्तव्या इत्येके तद्दाहर्त्तीयत इत्यकर्त्तव्या इत्यपर मद्दशमं च लुप्यश्च दशरात्र इत्यथाप्यकृतेन विश्वजिता मानस मध्यशाययिष्यदथाप्यनुष्टुप्संयोजनात्ते जागत मिदं स्थानं भवत्यथापि सचोत्पादास्ते ऽहीनोऽयं भवतीत्यभिचर्यमाणयज्ञ उत्तरः स खल्वैकाहक्लृप्तस्ते व्याख्याताश्चस्य सवनभाजस्तोमाः समावद्वाजो वेति विचारयन्तयेवं सवनस्तोमाः सम प्रयुक्ता भविष्यन्तीत्युक्थ्यसंस्थं ज्योतिष बृहत्पृष्ठ बार्हतं तन्न द्वितीयं हि स्थान मापन्न मिति तत्र यो द्व्यविकार उक्थ्यत्वाच्च बृहत्पृष्ठत्वाच्च स भवत्यपि च समन्तं समन्तीकारायाथात एकादशरात्रो दशरात्रान्ता अहीना द्वादशाहप्रभृतीनि सत्राणि कि मेकं स्थान मन्तरीया मिति वैकादशरात्रं करोति पृष्ठावलम्बस्य पञ्चाहः पृष्ठस्तोमस्य पष्ट महरिति पयसा पष्ठ मह रभ्या राजति स्व × × तां * पयोधापैरवं द्वे बृहत्यौ स्वरावुक्तौ बृहती † पुनः काखरथन्तरं स्वं लोक मित्यजाम्यर्थं व्याख्याताश्छन्दोमा दशमस्य स्थाने चतुष्टोमं करोति कस्य हेतोरिति छन्दोमस्य

* 'स्वरादुक्त'–इति ख। † 'बृहतीति'–इति ख।

समेत्यग्निष्टोमस्यात्यग्निष्टोमए स उ च्छन्दो रथन्तरपृष्ठो ज्योतिष्टोमतंत्रो यथा दशम मर्हरिति ॥ ६ ॥

कथं दशमधर्मा मानसच्छन्दोमस्य छन्दोमवत्यग्निष्टोमस्यात्यग्निष्टोमए स उत्तररथन्तरपृष्ठो ज्योतिष्टोमः कथं दशमधर्मा मानस मित्यकर्त्तव्या इत्येके स्वेन नामधेयेनैकाह आशिष्यते चतुष्टोमो ऽग्निष्टोम इत्यथापि न दाशमिकं लिङ्गं दृश्यते यथैतद् वहिष्पवमानस्यावृत्तिः साम्नां विप्रच्यावन मनुष्टुभः परोक्षीचिकीर्षेति कर्त्तव्या इत्याचार्या ये ऽन्ये मानससंयुक्तेभ्यः सएस्थापनीयं मानसं चतुष्टोमो ऽग्निष्टोम इत्यथाप्यक्ततेन विशृजिता मानस मध्यशाययिष्यद्यापि सत्रोत्पादं नाहीनक्रतावचिकीर्षेद् दृश्यते तद्दशम मृते मानसात् तथा मानस मृते दशमान्न चैतद्दशमस्य यथाव्याख्यातं दशमसंयोगास्तु कर्त्तव्या एष आचार्यसमयो ऽथापि तन्त्र महद्व्राचे वलिष्ठं ब्रुवत उस्रा-स्वादिष्ठे दाशमिक्यौ दृश्येते अथापि स्थानेन भागागमेन तन्त्रोपधिना छन्दोम्येनेति स चैव चतुर्विंएशो दाशमिकोऽन्ते दृश्यते यद्देतत् स्वेन नामधेयेनैकाह आदिश्यत इति वहुधैकाहाः स्वेन नामधेयेनादिश्यन्ते यथैष एवाश्वविराचे ऽभिप्लवे च

त्रिकद्रुका इत्यथैनां नाहीनिकतंत्रान् ब्रूमहे यथो एतन्न दाशमिकं लिङ्गं दृश्यत इति ब्रूमो यथाम्न्या-ख्यात मस्थानं तु सामवूहस्य समूढो दशरात्रो दृश्यते च बहिष्पवमानस्य नावृत्तिरन्यासु चानुष्टुप्सु दशमतश्च यथा त्रिककुभः ॥ ७ ॥

तत् किम्प्रभृतयोऽहीना इत्युक्थ्यप्रभृतय इति बहवाप्तिसो मुहूर्त्तमात्रा अग्निष्टोमे स्तुनशस्त्रैर्नाभि-धीयन्ते ता अद्यापि विधीयत इति शश्वदंग षोडशि-प्रभृतय एव भवन्त्यवैष चतुर्थी भागः प्रथमं स्थानं लभते सर्वे भागा आप्यन्ते सर्वे भक्ता यः स पुराहीनो भवति सोऽद्याहीन इति शश्वदङ्गातिरात्रप्रभृतय एव भवन्ति सर्वं मादित्यचरित मभि विधीयत उभौ वर्णौ क्रतक्रतिरेवात ऊर्द्धं शशुदङ्ग द्विरात्रप्रभृतय एव भवन्ति द्वे पृष्ठे चर्या लभते द्वयान्यहानि राथन्तर-बार्हतानीति तदिदं वृहदतिरात्रे स्थानं तदद्य स्थानं लभत इति शश्वदङ्ग त्रिरात्रप्रभृतय एव भवन्त्येव मह्भाजो ऽहस्सवनभागाः स्वस्थानातिरात्रा वनुष्टु-बिति शशुदंग चतूरात्रप्रभृतय एव भवन्त्यत्रैष चतुर्थो भागो ऽह्भजते यथा पूर्वे भागा इति शश्वदङ्ग पञ्चरात्रप्रभृतय एव भवन्ति शुध्यस्तु हैतच्चतुर्थं मह्नः

पञ्चमे ऽहनि रात्रिः सज्जत इति वा अश्ववदङ्ग षड्-
रात्रप्रभृतय एव भवन्त्यत्रैव चतुर्थो भागो भूयिष्ठभाग्
भवति अश्ववदंग सप्तरात्रप्रभृतय एव भवन्त्यासप्तान्
नानात्वानि वर्त्तन्ते नाना साधुरहीन इति अश्ववदं-
गाष्टरात्रप्रभृतय एव भवन्ति शुध्यत्यु हैतत् सप्तम
महरष्टमे ऽहनि रात्रिः सज्जत इति अशूदंग नव-
रात्रप्रभृतय एव भवन्त्यष्टरात्रे पुनरभ्युद्धृतेषु भागेषु
जगत्यस्थाना भवति साद्यस्थानं लभत इति अशूदंग
दशरात्रप्रभृतय एव भवन्त्यातद्विपर्यासं महर्नानात्वं
यद्दशमं नाना साधुरहीन इति अश्ववदंगैकादश-
रात्रप्रभृतय एवं भवन्ति शुध्यत्यु हैतद् दशम मह
रैकादशे ऽहनि रात्रिः सज्जत इति ॥ ८ ॥

अथायं द्वादशाहोऽहीनो भवती३ सत्र मित्य-
हीनो भवतीत्याहुरेके दीक्षेतेति भवत्यथापराहीनि-
कान्यहानीत्याचक्षते दाशरात्रिकाण्यहान्यथापराह
यद्वौरीवितेनाहीनानि अश्ववदंग त्रिरात्रप्रभृतय एव
भवन्त्येव महर्भाजो ऽहःसर्वभागाः स्वस्थाना रात्राव-
नुष्टुबिति अशूदंग चतूरात्रप्रभृतय एव भवन्त्य-
थापराह यजमान मेवैतया वर्द्धयन्तीत्यथापि वैरूपे
वदति यजमानं वा अनु प्रतितिष्ठन्त मुद्गाता प्रति-

तिष्ठतीत्यथाप्यस्मिन् दक्षिणाप्रवादो भवति ध्नन्ति वै पुरुषन्ती तरन्तपुरुमीढाभ्यां वैदग्विभ्याᳬ सहस्राण्यादित्सता मिति दक्षिणावन्तो ऽहीना इत्यथापि शश्वदनेनाध्वर्यवो याजमानं परिचक्षते यथाहीनेनेति सत्र मित्यपर मुभयतो ऽतिरात्रो भवत्यन्यतरतो ऽतिरात्रा अहीनाः समाहितप्रायणीयोदयनीयो भवति व्याहितप्रायणीयोदयनीया अहीना अथाप्यन्वहं गौरीवितो भवति नानास्वरा अहीना अथाप्यस्मिन्त्सत्रवादरूपो भवति यो वै देवानां गृहपतिं वेद सत्रे गृहपतिर्भवति भारद्वाजायना वै सत्र मासत स्तोमो युज्यते सचिवेभ्यो ऽहभ्यः प्रतिष्ठायैव सत्र मासते ऽङ्गिरसो वै सत्र मासत गौपायनानां वै सत्र मासीनानां यतः सत्रादुदस्थाता३ स्थिता३ दित्युभयं भवतीति लामकायन उभयथा ब्राह्मणं भवत्युभयथेष्टं वेद यत उभयेषा मयं प्रत्यय स्त्वेऽस्मिन्नहीनवादाः प्रत्ययत्वात्ते भवन्ति सत्रन्तु भवति सत्रकारोऽस्य भवति नैवाहीनेन सत्र मित्यपरं यत्तद्व्येव मिव ब्राह्मणं भवत्यन्यस्मै वै कामाय सत्र मन्यस्मै यज्ञो न तत् सत्रेणाप्नोति यदेकं यज्ञो न तद्यज्ञेनाप्नोति यदेकᳬ सत्र मिति तद्यथाप्रत्यक्षो

वृद्यो नैवाश्वत्थ इति वदनायनो अनश्वत्थ इति त्रयोऽहीना इति धानञ्जय्य एकाहहीनोऽहीनाहीनः सत्राहीन इत्ययं ज्योतिष्टोमो ऽतिरात्रः षोडशिमाने काहाहीनोऽत्र हि न किञ्चनैकाहिकं कर्म हीयत इति द्वादशाहो ऽहीनोऽत्र हि न किञ्चनाहीनिक महर्हीयत,इति गवामयनं सत्र महीनो ऽत्र हि न किञ्चन सात्रिक महर्हीयत इति तदिदं कुशलो भृतयस्तस्माद्धीना इति तदपि शश्वद् ब्राह्मणं भवद् दिष्ट मिति शाण्डिल्यायनो यस्य स्यादहीन इति यस्य तु स्यादहर्वर्त्तयेयेति द्विरात्रप्रभृतयस्तस्माहीना इति तदपि शश्वद् ब्राह्मणं भवति प्रजापतिर्यज्ञक्रतून सृजताग्निष्टोम मुक्थ्यं षोडशिन मतिरात्रं य एते द्विरात्रप्रभृतयो ऽहर्गणा वुवन् तस्मान्नापि महासीनिरिति तस्मादेव ते ऽहीना इत्यहीना इति ॥ ८ ॥

अथातः सत्राणि तेषां द्वादशाहः प्रथमस्तस्मिन्नुपक्लृप्तानि तत्र द्वे उपधिस्थाने अन्तरेणात्रिरात्रौ च दशरात्रञ्च यत्रैकैकेनाह्नार्थो भवति व्रत माहरेय्येतदेकार्थे दृष्ट मिति तस्य तदेव स्थानं यत्संवत्सरे द्व्यहार्थे गोआयुषी तयोस्तदेव स्थानं यत् संवत्सरे त्र्यहार्थे त्रिकद्रुकाण्यतुरहार्थे व्रतचतुर्थान् पञ्चाहार्थे

ऽभिप्लवपञ्चाहं षडहार्थे ऽभिपवः सम्प्लवत एतेन न्यायेनैव* एकोत्तरकल्पः क्रमत आ चत्वारिंश-द्रात्रा दुपचीयमानेष्वहस्सु रोहेणोपचयः प्रवर्त्तत एतं राचिसत्न्याय इत्याचष्टे यदेवापवदति तद् व्याख्यास्याम स्त्रयस्त्रिंशं स्त्रयोदशरात्रे कथं व्यूढ-समूढाविति समूढः स्यादित्येके समूढो ह्येनं सर्व-स्तोमो ऽन्ववैतीति व्यूढः स्यादिति गौतमो ऽनादिष्टः कल्पेन समूढो ऽयापि छन्दोयोगपर्वणि भागसमाप्ती चोपधीयते ऽयापि कृत्स्नो ऽयं दशरात्र इति व्यूढ मेवैनं सन्तं समूढः सर्वस्तोमो ऽन्ववैतीत्ययापि नादेष्यत्स्तोमसाम गौरीवित-चादेष्यत्कथं दशम-धर्मा मानस मित्यकर्त्तव्या इत्येके दशमस्तु लुब्धश्च दशरात्र इति कर्त्तव्या इति गौतमो ऽनाकृतेन वृतेन मानस मंप्रविश्याज्यते ऽयापि वाचो दशक्रमं मन उपक्रांतं कृत्स्नोऽयं दशरात् इति चतुर्दशरात्रे पष्ठं रूढावृत्तं करोति सैषा मध्यावृत्तिर्यज्ञातिरात्रात् पृष्ठ मुपयन्ति प्रथमस्याह्नो ऽथ प्रता मनुरूप इत्यजास्यर्थौ ऽथ खल्वत्र त्रयस्त्रिंशे अहनी सन्निपततः केनाजा-मीत्यन्न एव सामान्यादपि वा कण्वरथन्तर मनु-

---

* "अभिप्लवन्यायेनैव"-इति ख।

कल्पयेत् पूर्वस्याह्न आर्भव उत्तरस्य वा मध्यन्दिने पृष्ठा उत्तरस्य विषुवत्स्थानीयो वृतं पञ्चदश-रात्रस्य पृष्ठ एवोत्तरस्य तत्राग्निष्टुत मुप दधाति चतुर्मायो ब्रह्मस्थानवच्चिकीर्षं स्थाग्निः प्रत्नेन जन्मनेति होतुराज्य मजाम्यर्थं व्याख्याता अन्यतोऽतिरात्राः ॥ १० ॥

न्यायकॢप्त मा सप्तदशरात्रात् सप्तदशरात्र ऽभिप्लव-पञ्चाहः संप्लवेते ते खलु स्वतन्त्रा एव त्रिकद्रुकाः स्युरित्येके यावत् षट्तान्नेयुः षडेव सन्तस्तन्त्राण्या-पादयेयु रित्यापादयितव्यं स्तन्त्राणि मन्यत इति गौतमो ऽहर्गणप्रत्यवायो ह्येव मभविष्यत् त्र्यहाद् द्व्यह मेव मिव ब्राह्मणं भवत्यनन्त्रा वा एता यत्पञ्चाहविधा इत्यन्ताहर्ह्येतः षष्ठ मुपैतीति स वै पञ्चाहतन्त्र एवा-भविष्यन्न षष्ठात् किञ्चिदत्याहरिष्यदिति प्रत्याहरे-दिति गौतम एव मिव ब्राह्मणं भवति पञ्चम ऽहनि षष्ठस्याह्नस्तृतीयसवनं प्रत्याहरति षडहाविलोपाय स त्वेव स्तोमो यः पञ्चमस्य सा संस्था रथन्तर-बृहत्पृष्ठाः पञ्चमस्याह्न एष प्रत्नानुरूप इत्यजाम्यर्थो व्यावृत्त्यै पृष्ठाभिप्लवयोः श्यैतनौधसब्रह्मसामा पौ-ष्कलस्युधौ ष्णिहाभीवर्त्तसुज्ञानयो रन्वमायं स्थासु

श्यैतनौधसे अभीवर्त्तकारिता हि प्रगाथा इत्ये-
तेनैवोत्तरे व्याख्याताः पाष्ठिकानि पञ्चमस्याह्न
उक्थानि तत् कुशल मुहरति गूढं द्विपदा अन·तेना-
चिकीर्षीत् तचैतद्वैधावाह नवमादन्तान्वितं तद्य-
द्वेतासु यजिष्ठं त्वा ववृमह इत्येता आपन्नाः पञ्चम
मह्नर्भवन्तीति सौश्रवसं मारुतं वेति विचारयन्ति
वैभक्तए सौश्रवसं पाञ्चमिकं मारुत मथ यत्ना-
भिप्लवयो रात्रिसत्रेषु कथं कल्पविचारितानीत्य-
कर्त्तव्यानीति गौतिवृचिर्नान्यत्र संवत्सरानुसंवत्सर-
सम्मितासु च नेतिकर्त्तव्यानीति गौतमो यावन्ति
यावन्त्यभ्यप्रवीतेति विहितान्यप्रतिषिद्धान्यथाप्येव
माप्नितरा संवत्सरश्चेति विएशतिराचे द्वाद्दार्थे सति
विश्वजिदभिजितौ करोति कस्य हेतोरिति सम्पूर्णां
विराजए सत्र मुपक्रतं तावतौ वैरोजौ वा पञ्चसूक्तैः
स्तोमैः पृष्ठैरिति यद्वैव पृष्ठमात्रौ तौ पृष्ठ्यादनन्त-
रिताविति ॥ ११ ॥

पूर्वस्मिन्नेकविएशतिराचे तृतीयेऽभिप्लव आवृत्तो
भवती३ अनावृत्त इत्यनावृत्त इति गौतिवृचिर्न
ह्यावृत्तिर्विज्ञायते ऽथापि कथए सम्राड्ढो विषुवान्स्या-
दित्यावृत्त इति गौतमो रोहप्रत्यवरोहौ सत्र मुपक्रतो

विषुवानिति यद्देतदनादिष्टावृत्ति रिति नाभिप्लवस्या-
वृत्तिः क्वचनादिश्यते ऽर्थ एवावर्त्तयतीति यद्देतत्
कथं सप्ताहो विषुवान्स्यादिति दृश्यते षडहो विषु
वत्स्थाने चतुर्दशराचे तथा सप्ताहः संसत्स्वित्य-
थापि यदनावृत्तो ऽभविष्यदतिराचो ऽभिप्लवः षडहो
द्विराचो द्वावभिप्लवौ षडहा वतिरात् इत्यभविष्य-
दिति रूढावृत्ताविति ततो नाना दिशत्युक्थ्या
नुत्तरस्मिन्त्स्वरसाम्नो न्रुवते पृष्ठ्योपधानात्तत् तान्येव
विधनानि यान्येकविंशत्यहकारिणां श्येतनौधस-
म्रह्मसामानः स्वरसामान पौष्कलश्युध्यौष्णिहा विषु-
वतः साम तृचस्य लोक आभोशव मभीवर्त्ता पाया-
च्छायन्त इव सूर्य मिति विकर्ण मिन्द्र क्रतोर पाया
न्यायक्लृप्त मा संसद्यः संसत्सु पृष्ठ्य विषुवत्-
स्थानीय करोत्यनिरुक्तं च त्रयस्त्रिंशतं खलूत्तरस्य
त्र्यहस्य स्तोमैरभि विधत्ते वै विषुवतीय मत्याधि-
रसन्रस एष आवृत्तः स्तोम. पूर्वस्याहो ऽनुपूर्वस्तोम
उत्तर एत विशालः पृष्ट्य इत्याचक्षते पृष्ठ्यस्तोमं पुर-
स्ताद्योपरिष्टाच्चरूढावृत्तामनिरुक्तं सप्तमं मात्रा सम्पूर-
णायैकाहं तत्रानुष्टुभिबृहत्कणैत्यजाम्यर्था ऽथापि
वृतस्थानो भवत्यौपोत्तमादुभयसामवतमिति ॥ १२ ॥

न्यायक्लृप्त मा चयस्त्रिꣳशद्राचान्तपञ्चाहविहितं तत्कतमोऽयं पञ्चाह इति पृष्ठास्तोमः पञ्चाह इति कापटवो ऽनादेशे क मन्यं प्रतीयामो ऽथापि यत्र-यत्र चैकाहको भवत्यादिशत्येवैनं तत्-तत्रा ऽथाप्याह नाना ब्रह्मसामान्युपयन्तीत्येष नाना ब्रह्मसामा भवत्यथापि दाशरात्रिके रहोभिः पञ्चाहात् संवर्ग-यन्ति पृष्ठास्तोमपञ्चाहत्वादेवा ऽथाप्याह त्रिवृता प्रयन्ति त्रिवृतोद्यन्तीति त्रिवृत् प्रथमं दाशरात्रिकं तदेवावृत्तश्चोदयनीयं भवत्यथापि विश्वजिता जा-नीमो विश्वजिद्युत पृष्ठाविलोपानन्नवैतीति स वै नून मभ्यासक्तो ऽभ्यासक्तो ह्यहीनेष्वनभ्यासक्तान्तु मन्यामहे न हि विज्ञायते ऽभ्यासङ्ग इत्यभिप्लवपञ्चाह इति गौतम आदिष्टः कल्पेन भवत्यथापि न पृष्ठा-पञ्चाहः क्लृप्तोऽक्लृप्तो विश्वजितेन पृष्ठास्तोमपञ्चाहो ऽभिप्लवपञ्चाहस्तु विद्यते तं क्लृप्तवदतिक्रामत्यथापि कृत्स्नावेव पृष्ठास्तोमौ नाभिप्रयोगं लभेते कुतो विलुप्तौ लभेयाता मित्यथापि शश्वदेके ऽध्वर्यवो ऽभि-प्लवपञ्चाह मादिशन्त्यथापि कालबविनो व्यूहेनाद्वि-ग्रन्थ्यतिरात्रो ज्योतिर्गौरायुः पञ्चाहः स द्वितीयः स तृतीया विश्वजिदतिरात्र इति यद्येतदनादेश इत्या-

देशजातिरेषा भवति यदधिकारो यद्वेतद्यच-यच चैकट्ठको भवत्यादिशत्येवैन तच-तचेति पृष्ठास्तोम-पञ्चाहो वा अयादिम्यते पृष्ठ्यावलम्ब उत्तरे नव-राचे छन्दोमवति दशराच इति यद्वेतन्नाना ब्रह्म-सामन्युपयन्तीति कारणकारित मेतद्भवति यद्वेतद्दा-शराचिकेरहोभिः पञ्चाहात्मंवर्णयन्तीति सङ्ग्राभि-प्राय एतदाह द्वौ पञ्चाहौ दशराच इति यद्वेतत् चिवृता प्रयन्ति विवृतोद्यन्तीत्युक्तम एतत् चयस्त्रिंश-शद्राचे ऽभिनन्दाब्राह्मणं वदति चयः पञ्चाहाः पुर-स्तात् चय उपरिष्टादिति यद्वेतद्विश्वजिता जानीम इति नेह पृष्ठ्यार्थेन विश्वजिता गच्छति॰ विषुवदर्थेनैष आगच्छतीति नाना ब्रह्मसामान्युपयन्तीति यद्वै पृष्ठ्या-योरनुव्यत्ययं श्यैतनौधसे व्यत्यहरिष्यद्भूयान् व्यत्यय आकाद्यो ऽभविष्यत् प्रतिपदा माज्याना मौष्णिहयो रिति श्यैतनौधसवर्णानि वार्हद्रयन्तरपृष्ठ्याद्यद् विश्व-जितं विषुवन्त मितो यदपैति तस्यैतस्मिन्ननुग्रह इति ॥ १३ ॥

॥ इति निदानसूचे नवमः प्रपाठकः ॥

---

॰ "विश्वजिदागच्छति -इति घ।

## ॥ अथ दशमः प्रपाठकः ॥

अग्निर्मूर्द्धा दिवः ककुदित्युक्थप्रणये करोति कस्य हेतोरिति सामान्या मूर्द्धान्वती वैषुवतीयेऽभिरूपा तचैतत्सत्त्रासाहीय मापन्नञ्च विश्वजित मपि च वैषुवतीयं विषुवस्युभे षोडशिसामनी करोति वैषुवतीय मन्यावित्सन्नुत्तमः पञ्चाह आवृत्तो भवतीः३ अनावृत्त इति तद्व्याख्यातं पूर्वस्मिन्नेकविंशतिरात्रे सच मासत उत्तरं तचैते सामस्य निदधात्येकविंशतिरात्रञ्च द्वादशाहं चैते नानात्वक्लृप्ते इति पञ्चाहक्लृप्त मुत्तमं प्रथमे विपर्ययुक्ताः पञ्चोऽहा हन्त पञ्चाहानेव करवाण्येवं पञ्चसोः समाधिरिति तत्र कथं वृहद्रथन्तरे इति यथालोक मेव न हीह तद् ब्राह्मण मिति कथ मु ब्रह्मसामनीति श्यैतनौधसे एव न हीह तद् ब्राह्मण मिति यस्य तु स्यात् स एवायं पञ्चाह इति तथैव तस्य बृहद्रथन्तरे तथा ब्रह्मसामनीति ते चेद्यथालोक वृहद्रथन्तराः प्रथमस्य प्रथमस्याङ्ग एष प्रत्यानुरूप इत्यजाम्यर्थी यद्यु वा अयथालोक वृहद्रथन्तराः प्रथम एवायोपरिष्टाद्यदि ह यथालोक वृहद्रथन्तरा उत्तरे वृहन्निधनं वार्षाजम्म मनुकल्पयेद्यदि वा अयथालोक वृहद्रथन्तरा उत्तम

एवा ऽथ खल्वाह यद्दिभर्वजति छन्दोमानुपयन्तीति कस्येदं ब्राह्मणꣳ स्यादिति षाडहिकानाꣳ समस्तानामिति चतुरावृता मिति छन्दसा मिति त्रिवृता प्रयन्ति त्रिवृतोद्यन्तीति त्रयः पञ्चाहाः पुरस्तात त्रय उपरिष्टादिति न्यायक्लृप्त मा विधृतिभ्यो न्यायक्लृप्त मा विधृतिभ्यः ॥ १ ॥

अथैता विधृतयो भूतानां विधारिण्यस्त चैतानहर्गणान् करोति त्र्यहꣳ षडहं दशाहं द्वादशाह मिति तानतिराचैर्विधारयत्येवꣳ सर्व मेव विधृतं भविष्यतीति कानि तन्त्राणीति दशरात्रस्तोमविक्लृत इत्येके ज्योतिष्टोम इति शौचिवृक्षिरनादेशे क मन्यं प्रतीयासो ऽथाप्याह ज्योतिष्टोमस्यायनेन यन्तीति शतसंवत्सरे ज्योतिष्टोमायनेन यन्तीति वैतदवोचदिति कौत्सुरुविन्दे इति गौतम एतेन कल्पेनादिष्टे भवत इष्टो-तद्भिरूपतरं यथो चाहीने सचे स्त्रेव समासो ऽभिरूपतरो यथो चाहीन इति व्याख्यातानि सन्निपामाख्येवं चेत् सन्निपाम स्यात् कौत्सस्य लोक उद्दꣳशीय मेतेनेडाकामस्य सिध्यत्यजामिकल्पस्येति तद्यदेतास्वा रवा विशन्त्विन्दव इतोरात्रा राचैर्विक्लृतौ दृष्टा इति नित्यासु वेति विचारयन्त्यर्थकारित मुद्दꣳशीयꣳ स किमर्थो

नित्याश्रावयेदिति पञ्चदशानां दशमस्य नानदए
षोडशिसामैवं छन्दसा मनन्तरं यक्रतु सन्धिपामैव
भवत्यथौशनकावे समाचारशिष्यद्यथा रथन्तर मप-
चित्या रथन्तरए सञ्चरते ऽथापि कावं तृतीयसवनेन
समधिचारयिषौत्तदशेनौशन' तचैते वैश्वज्योतिष-
वासिष्ठे अपुरस्तात्स्तोमे पदानुस्वारे यद्यौशनकावे
एकविंएशेष्वर्कान् करोत्यन्तर्पयिणो हि स यन्नवम-
प्रभृतिष्वन्तर्पयित्वादेवाधाप्येते सप्तमप्रभृतिषु दश-
रात्रे दृष्टा उपपन्न' द्वादशाहे नवमप्रभृतिषु प्रयुज्ये-
रन्निति कावस्यर्चु दीर्घतमसोऽर्कं एतासाए हि स्थान
मापन्ने द्वादशे ऽहन्युत्सेधनिषेधौ करोति दशमा-
दन्तान्वितौ यमातिरात्रात्स्वादित्याना मष्टावति-
रात्रान् करोत्यष्टौ यमा आदित्या इत्यादितानां
द्वन्द्वदर्शनादभिप्लवातिरात्राणां द्वन्द्वानि करोत्यथ
खल्वायुस्तोमे ऽभिजिति वाजामिकल्पे सौभर'
करोति तत् खलु हारिवर्णस्यर्चु करोत्ये तासाए हि
स्थान मापन्न मिति ॥ २ ॥

अथैता आञ्जनाभ्यञ्जनाः प्रजापतौपसा मुपक्लप्ता-
स्तास सर्वस्तोम मुपहारायैस्येषो ऽस्च सोमतः सए-
स्थातः पृष्ठत इति तद् यत् षड्विंएशस्थान मेव

मपर्वविलोप इत्युक्तमावभिन्नवा वावृत्तौ भवता३
अनावृत्ताविल्यनावृत्ताविति शौचिवृचिर्न ह्यावृत्ति-
र्विज्ञायते ऽयाप्यमध्ये सर्वस्तोमो मध्यस्यानो विषुवा-
नित्यावृत्ताविति गौतमः प्रतिष्ठाकामसत्र एतस्मिन्
स्थाने क्रतं करिष्यन् भवति नैतदन्यत्र मध्याद्दाग्तो
भवतीति यद्वैतदनादिष्टावृत्तिरिति नाभिन्नवस्या-
वृत्तिः क्वचनादिश्यते ऽर्थ एवावर्त्तयतीति यद्वेतद-
मध्ये सर्वस्तोम इत्यपर्वविलोपायैतन्नवति पञ्चाम-
स्यामध्ये विषुवन्तं यथा त्रयोदशरात्रे सप्तसप्तिरि
संवत्सरसम्मितासु प्रायणीये चतुर्विंशं प्रतिषिध्यत्
तं त्रिवृद्देव कार्यं मित्याह निष्पन्नचोदितत्वादेतद-
पूर्वं प्रायणीयं चेति स्तोमविकार मेके तस्यैवाधि-
काराच्चतुर्विंशं त्वेव कार्यं मिति निष्ठा तथा हि
ब्राह्मणं ता एताः संवत्सरम्नि मुपक्लृप्तास्तत्र
यद्देतान्यहान्येवं संवत्सरस्य प्रयुक्ततमान्यहानि
भविष्यन्तीति तृतीये ऽभिन्नत्र इषीवृधीये समन्ते
कुर्या३न्न कुर्या३दिति न कुर्यादित्याहुः पृष्ठ्यसान्निपा
तिकं इमे भवतो न चेह पृष्ठ्यो भवतीति कुर्यादित्य-
परं नाना पर्वणोरिमे सन्तानार्थे भवतो नानापर्वणो
रेवैते अहर्गणस्यैकाहस्य भूयसा चैवं सांवत्सरिकाणां

द्रव्याणा मविप्रयोगो भवत्यथाप्यत्र विश्वजिदभि-
जित्सन्निपातो भवत्येतौ च पृष्ठासदृशावित्यावृत्ते
ऽभिप्लवे कतमत्सन्नि कुर्यादिति यद्युक्त मित्येक एतद्दे-
कार्थे दृष्ट मथाप्येतदेषा मावृताना मन्ते भवति
मध्योद्गाय मिदं सच मित्यपत्य मित्यपर मेवं पुर-
स्ताच्छन्दोमानां द्विप्रयुक्तानि भवन्ति सन्ततीत्यपर
मेतद् येषा माद्यं भवत्यसम्प्राप्तिरन्ततो लोपः शाक्वर-
वर्ण मित्यपर मेतदेषा मन्तं भवत्यथाप्येवं सम्प्रा-
पैयं भूयः सांवत्सरिकं द्रव्य मनुगृह्णत इति ॥ ३ ॥

प्रजातिकामसत्र मुत्तरं तत्र नवाहान्करोति
न्यूनात्प्रजाति रिति षडभिप्लवत्र सचखेदं स्थानं
स चतुरभिप्लवता मनतिचिक्रमिषन्नेतानेव षडहा-
नसंख्युह्य चतुरो नवाहान् करोत्यथ खल्वत्र भाग-
स्तोमान् करोत्येते या न दृष्टा इति तेषां यदेवंविधः
संख्यायोग एव मुभे रूपे षडहरूपञ्च ककुप्रपथाया-
पैयं तावत्यः संख्या यथा पश्वा मभिप्लवाना मित्यु-
त्तरयज्ञं यो विधृतिषु दशरात्रे ह्यर्कान् करिष्यन्
भवति राथन्तरेणाह्ना त्रिवृतः प्रतिपद्यते बार्हतेन
पञ्चदशान् राथन्तरेण सप्तदशान् बार्हतेनैकविंश-
शानन्यमेतानवाह्नान् व्यायासः कुशलेनोपपद्यत

इति प्रतिष्ठाकामसत्र मुत्तरं तदाङ्गनाभ्यङ्गनाभि-
व्याख्यातं न्यायक्लृप्त मेकषष्टिरात्रा दथैतदेकषष्टि-
रात्रं संवत्सरसम्मितास्थान मेव तत्र नवाह मभितः
पृष्ठ्यौ करोत्यैवं सर्वं सांवत्सरिकं द्रव्य मनु-
गृह्णात इति ॥ ४ ॥

अथ केनासंस्तीर्णान्यभि विदधीतेति ऽतिरात्रिसत्र-
न्यायेनेत्याहुर्यथा शतरात्र मित्यपि वा दशरात्रस्य
व्रतं चान्ते निधाय यत् सांवत्सरिकाणा मह्नां समु-
वहारः सिद्ध्येत्तथा कल्पं कुर्वीत यथा संवत्सर-
सम्मितास्वपि वा यत्र भागस्तोमानां समविभागः
सिध्येत्तस्य कल्पं कुर्वीत यथा सवितुः ककुप्सु ज्योति-
ष्टोमेन वैष जनस्य पूरयितेत्यथ प्रायणीयोदयनीय-
योरतिरात्रयोरादिशत्येकत्र षोडशिनं नैकत्र तत्
कथं स्यात् षोडशीति यथा विराट्सम्पदं सम्पत्स-
मानां मन्येत तथा कल्पं कुर्वीत द्वादशाहस्य च
गवामयनस्य विराट्सम्पदं षोडश्युपक्लृप्तौ ऽथानुप-
पद्यमानायां प्रक्लृप्तौ निर्णीय यथा मन्येत तथा
संशयेषु प्रतिपादयेत्तेषां यानि रात्रिसत्रन्यायेन
वर्त्तन्ते षोडशिमन्तौ तत् यथा द्वादशाहेऽथ यत्र
रोहप्रत्यवरोहौ सत्र मुपक्लृप्तमषोडशिकौ तत्र यथा

गवामयने यत्रानुमध्यं षोडशिकौ यत्र यत्रो न दृश्येत षोडशिमन्तौ तत्र तत्र कात्स्न्र्यायापि वा चतुष्टोमेष्वषोडशिकौ सर्वस्तोमेषु षोडशिमन्ताविति षोडशिमन्ताविति ॥ ५ ॥

अथातः सांवत्सरिकाणि तेषां यद्गवामयनेन सामेति व्याख्यातं तद्यदपवदति व्यावृत्यर्थे वा तदपि ब्राह्मणेनैव कारणं वदति तत्रादित्यानामयने उद्भिद्वलभिदौ मात्रासम्पूरणाय करोति तच्चैक इन्द्रक्रतावुत्सेधनिषेधौ कुर्वन्त्येष औत्तरपाचिक इति तत्र निन्दा यत् षट् प्रगाथा भवन्त्यष्टौ प्रागाथिकानीति यथासमाम्नायन्त्वेवैवं पञ्चसोः समाभिरिति पञ्चदशत्रिवृद्भ्याः सुपहिते गोआयुषी ते पञ्चदशत्रिविद्भ्यां प्राचिक्रमैषीच्छन्दोमस्तोमं दशरात्रं करोति पशुता छन्दोमा इति तस्यान्ते चतुर्विंशे सन्निपतन्तस्तत्र पञ्चविंशं करोति नानात्वार्थः स उ चतुर्विंश एव भवति चतुर्विंशो ह्येवैष ऐकाहिकप्रसुत इत्यालोभाद् बृहद्रथन्तरे पृष्ठे अथापि स्तोमाच्चेतायाथ्येवं तावन्तः पृष्ठोपाया यथा गवामयने समूहति बार्हद्रथन्तरपृष्ठावुद्धरति षोडशिनं चतुर्थादिरात्रा मन्वपायं स्वराजपियुः स्तोमस्य वा

लोभादन्यथापि यद्यु हैन मेकविंशं मकरिष्य दम-
यिष्यच्छन्दोम्याद्यदि छन्दोम मेकविंश्यान्न वेक
मेकविंशे क्रतावनेकविंशस्तथेह भवतीत्यथाप्येवं
तावन्तः प्रोडग्युपाया यथा गवामयने ऽथाप्येवं पञ्च-
दशसप्तदशरात्रश्च सिध्यति षट् स्तोत्रीयाः पञ्च-
दश मतिरिच्यन्ते त्रीण्यत्र सन्तनीत्येकप्रस्तावानि
तेभ्यः षट् प्रस्तावा लुप्यन्त एव मेषा पञ्चदशसम्पत्
सिध्यतीति ॥ ६ ॥

दशमञ्च चतुस्त्रिंश मेके ऽग्निष्टोमसाम कुर्वते
छन्दोमताये चतुर्विंश मेक एकाहस्तोमो भवतीति
त्रयस्त्रिंशत्त्वेव स्यात् क्रियमाणे ह्येवैतस्मिन् पुरा
छन्दोमस्तोम मेतदहर्भवतीति यथाभूयस्त्वेनाथाप्याह
चत्वारश्छन्दोमा इत्येष एव संशय एकस्तोमेषु
द्वादशाहेषु सर्व एव द्वादशाहो विकृतः स्यादित्येके
द्वादशाहे च क्रियमाणे किमर्थो ऽवयवं प्रतीया-
दिति कृतप्रमाणाः संशया भवन्तीत्यपरं ते पश्या-
मोऽन्यावतिरात्रौ कृत्वाऽऽभिजिद्-द्वादशाहो विश्व-
जिद्-द्वादशाह इत्यथापि नानापदि रात्रेः ससन्धि-
*कायाः स्तोमविकारो विद्यते सा कथं संशयेषु*
प्रतीयेताथापि महत्सु स्तोमेषु सन्धिस्तोत्रीयान् प्रत्य-

कल्पयिष्यद्यैतेन सर्व एकस्तोमा व्याख्याता अप्य-हीनेष्वथ षोडश्येकविꣳशस्तोमो वा स्यादपि वा ये प्राक् त्रिणवचयस्त्रिꣳशाभ्या महस्तोमं तेष्वन्विया-देकविꣳश मुत्तरेष्विति तौ खल्विमौ द्वादशरात्रौ भवत उभयचाह दशमधर्मा मानसे तु विचारयन्ति पूर्वस्मिन्निस्येके एषो ऽयुक्स्तोमो विकृतो नानापृष्ठे धर्मीत्युत्तरस्मिन्नित्यपर मेष स्यानस्यो ऽथापीदं यद्-नाम्न मेतद्ग्ने ऽभिरूप मथापीत्यं व्रतस्य मानसस्य चाव्यवायी भवत्यथापीयं त्रिवृत्-पञ्चदशस-प्तदश-रात्रयोः सिध्यत्यथापि यत् पूर्वस्मिन्नकरिष्यन्नहुना कृतेन मानस मध्यशाययिष्यद्यापि यत् पूर्वस्माद्द्व-शरात्राद् वहूपैति तद्येतस्मिन्ननुग्रह इत्यन्न श्रायूꣳषि पवस इत्युत्तरस्य दशरात्रे करोति कस्य हेतोरिति शिशुंत्वन्न मिदं भवति सैषाग्नेयी पठिताभिव्याहारा शुद्धार्थे ऽभिरूपाथाप्यग्नेय्य श्राङ्गिरसः सैषाङ्गिरसी देवतेति ॥ ७ ॥

प्रतिष्ठाकामसत्र मुत्तरं तत्र षाड्हिकान् मास-भाजो रूढावृत्तान्निरदधात्येवꣳ सिद्धौ रोहप्रत्यव-रोहाविति व्याख्यातं व्रतं विषुवाꣳस्तचोक्त मयने-ष्वपि पृष्ठास्तोमो विद्धतः स्यादित्यथापुरादाहरन्ति

यज्ञसमासं उत्तरं तचैतानि व्युदितानि स्थानान्यति-रात्र: शौनासीर्यो मासो दशरात्रो महाव्रत मिति कर्त्तव्यानीत्येक एष सन्नन्याय कृतान्कर्त्तव्यानीत्यपर मेवं पुराणं वेदयन्ते ऽथाप्यनादिष्ट: प्रायणीयो व्यूहेन भवति तत्र यत् पुरस्तादतिरात्र मकरिष्यं लुप्तो रोहो ऽभविष्यदपि च सुत्याए हविर्यज्ञा व्यव-यिष्यन्निति यज्ञसमासत्वाद्धोत्रासमासो हविर्यज्ञ-पक्रमत्वादत्सरूकौश्चमसैर्भक्षयन्त्यथ, खल्वत्र द्वौ गृह-पती सन्निपातता होत्राध्वर्यवेनैकेन सुवर्त्तये इव स एष वृत्त्यर्थं एव द्वितीय: स यन्नु हपतिरेतन्न गास्थान मिति स्वर्गकामसत्र मुत्तरं तत्र संवत्सराभिप्रयोगो भवत्येवं यज्ञतपसोरभिवृद्धिरिति तत्रोक्त मय-नेषु तेषां यान्येकाहैर्वर्त्तन्ते गौरीवितानि तानि यानि नानाहोभि: सगौरीवितानि नानाह्ना हि सन्तानार्थं गौरीवित मित्यथ पुरुषस्य नारायण-स्थायने विश्वजिद्वेोभयो: पञ्चसो: स्यादितोऽक एवं पञ्चसो: समाधिरिति यथासमाम्नायन्त्वेवैव मवि-लोप इत्यथैतेषु दशसु विचारयन्ति कानीमान्यहानि स्युरिति ज्योतिष्टोम इत्येक एषो ऽविकृत: * पुर-

* 'एष विकृत "-इति ख।

स्यात्, भवत्यनापन्नान्येतानि पृष्ठानि ज्योतिष्टोम मित्यपरं पृष्ठं गृह्यमाणं महद्गृहीयादिति ॥ ८ ॥

अथैतच्चतुष्कतापश्चित मित्याचक्षते चत्वारो दैवा मासाश्चत्वार औपसदाश्चत्वारः सौत्यास्तस्य कल्पो गवामयनस्य प्रथमोत्तमौ पूर्वस्य पक्षसोमांसौ स्यातां तथान्तस्याऽथैतन् महातापश्चित मित्याचक्षते चत्वारो दैवाः संवत्सराश्चत्वार औपसदाश्चत्वारः सौत्यास्तस्य कल्पो गवामेवायनं चतुरुपेयु रपि वैतस्यैव पक्षसो अभिवृद्धे स्यातां त्रयोविंशतिरयनमासाः पूर्वे पक्षसि स्युर्दाविंशति रुत्तरेऽपि वैतान्येव प्रथमानि चत्वारि समस्येद्यथा त्रीणि संवत्सर इत्यपि वा ज्योतिष्टोमायन मेव कुर्वीरन्नेतेषां यन्मन्येरंस्तदपि वा यथा गणसंवत्सराणां तथा कल्पं कुर्वीताऽथैतच्छाक्त्यानां षट्त्रिंशत्संवत्सरं तस्य पुरोडाश मन्नसंरोधाद्यदन्तःपुरुषस्तदन्नदास्य देवतेति ते यन्माषसमया वा श्यामाकमया वीभे आपन्ने हविष्ट्व मित्यथैतानि महासत्राणि देवाना मेव दीर्घायुषो देवा इति मनुष्याणा मपि सिद्धानि स्युरित्यपरं बहवः सन्निविश्य सुनुयुः पुत्राः पौत्राः प्रपौत्रा इति तानि खल्वतिरात्राण्यविषुवत्कान्यूर्द्धायनानीमानि भवन्ति

तत्र यदतिरात्रं वा विषुवन्तं वा करिष्यंल्लुब्धो रोही ऽभविष्यदथापि न कल्पेनादेशो विज्ञायते नु ब्राह्मणेनाद्यापीत्रं पुराणं वेदयन्ते ऽधाप्याहैकविंशोऽन्ततः स्तोमानां भवतीति शतसंवत्सरे ऽनतिरात्रस्यैव सत इत्यथैतदग्नेः सहस्रसाव्यं परमा विराज मुपक्लृत मपि वा सहस्रसंवत्सरेष्वा मेवोपक्लृतᳪ स्यात्तच्चोक्त मयनेषु ॥ ८ ॥

स्वर्गकामः सत्र मुत्तरं तद्यत्सारस्वत मेषा स्वर्गाक्ता भवतीत्यथैषा ऽग्नये कामायेष्टिः पृष्ठशमनार्थैनेव भवत्यथ खल्वाह तस्या मश्वाञ्च पुरीषीं च धेनुके दत्त्वेति केभ्यो दद्युरिति प्रसर्पकेभ्य इत्येके दृश्यते च प्रसर्पकेभ्यो दान मथापि व्रात्यस्तोमेष्वनृत्विग्भ्यो ददातीति पृथगेवेतरेतरस्या इत्यपरं कर्त्तृभिः संयुक्ताः क्रतुदक्षिणा भवन्ति तत्रातपनिवर्त्यमाने किमर्थो ऽवयवं प्रतीयादित्यरुणायां क्लृप्ता मुदवसानीयाभिरिष्टिभिर्यजेरन्निति गौतम एव मुदक्सᳪस्थं कर्म भवत्यथापीषा लोकोक्ता भवतीति सारस्वते एवोत्तरे कुशलं यत्सन्ततस्तुल्ये त्रिवृत्पञ्चदश मिन्द्राग्न्योरयन मेताविन्द्राग्न्योर्भक्तौ इति यज्ञायायुषी इन्द्रकुक्षौ सम्राये चापि चैता मभ्या-

मत्याधिश्विवृत्पञ्चदशयोरिति विकद्रुकक्लृप्त मुत्त-
सथैतेऽयने दृष्ट इति यदु विश्वजिदभिजिताविन्द्र-
कुत्ती सम्राये चापि ताभ्या मत्याधिश्विकद्रुकाणा
मिति ॥ १० ॥

अथैतद् दार्षद्वतए स्वर्गकामायनं तथैते पुरश्च-
रणे गौपाल्यञ्चाग्नीध्यनञ्च दीचाभ्यः प्रति गौपाल्य
मुपसद्भ्योऽग्नीध्यनए स यदृत्विजो वाचार्यस्य वैतौ
स्थानिनौ गुरू तयोः प्रेषचरण मभिरूपं तदेव
मनुष्येभ्यस्तिरो भवतीति तत एवारण्य माविशेन्न
पुनर्ग्राम माव्रजेदिति स्वर्गं लोक माक्रमत इत्येके
व्यावर्त्तते श्रेयान् भवतीति वा ऽथैतत्तौर मिष्टा-
यनए स्वर्गकामाय त मेवाभिरूपं तदेव संवत्सरसु-
त्यान्नेदीयस्था माचर्येप्सीत् किमर्थं उ तदिति
सासुज्यए स्यादित्यननुभूतिजए स्यादिति सिद्धिदर्शी
वा स्यात् सिध्यति वै खलु संवत्सरसुत्याया इष्टा-
यनेनाभिस्तवापि सुत्या देवता भवन्ति यावदेव
मर्थरूपस्थादीचितः कृष्णाजिनं प्रति मुञ्चते नव-
नीतेनाङ्गान्यभ्यङ्क्ते दीचारूप मेतद्भवति व्याख्याता
इष्टय इन्धन्तं वा पश्वन्तं वा सोमान्तं वा कुर्वीते-
त्युभयोः पृष्ठशमनरूप मेतद्भवति ॥ ११ ॥

सर्पसत्रे किं मयनं स्यादिति गवामयनं स्तोम-विकृत इत्येके ऽनादिष्टान्यहानि व्यूहेन भवन्ति संव-त्सर आदिश्यते तत्र किमर्थो ऽवयवं प्रतीयादित्य-थापि विषुवदादेशेन रोहप्रत्यवरोहौ गवामयनो त्पादावेतौ भवतो ऽथापयाह पण्डकुषण्डावभिगरा-पगराविति वृते ऽभिगरापगरौ भवतः कौसुरुविन्दे इति गौतम एते कल्पे ऽनादिष्टे भवतो यद्येतदना-देश इत्यादिष्टे कल्पे न * भवतो यद्येतद्विषुवता-देशेन रोहप्रत्यवरोहाविति दृश्यते विषुवानेतयो-स्तल्पयोऽर्हति वातवतो रयने तथा रोहप्रतावरो-हाविति यद्येतत् पण्डकुपण्डावभिगरापगरावित्यन्यत्र सतो स्वदिष्यदपि वेद्दोपासकयोरपि वा वचनाद-भिगरापगरौ स्यातां तत् खलु रूढप्रत्यवरूढं ततो विषुवानिति व्याख्यातानि सर्पसामानि विषु-वति सर्पसामानि कल्पसमायाणीति तेषां यद्येव मानुपूर्व्यं निधनान्येषा मादित्यस्त्वेषा मुपक्लृप्तानि तेषा मेव मानुपूर्व्यं मथापेयषा मेतद्गणनिधनं तत् चिणिधनानुग्रहाय माध्यन्दिने ऽचिकीर्षीदानुपूर्व्य मितरे ॥ १२ ॥

---

* ख-पुस्तके 'न'-इति पदं नास्ति।

अथैते गौपूक्ताश्वसूक्ते भाजाभाजयोः स्थाने स-
माये चापि वैनयोर्ज्योतिः समाये निधने यथा भाजा-
भाजयोरिति दशिनऽ स्तोमं करोति दशशुक्राः सर्पा
इति द्वादशं विषुवन्त मित्याधिस्तन्नथापि शश्वद्
द्वादशौ विषसेचनौ नाम सर्पाणां दन्तौ भवतस्तद्रूपं
विषुवत्यचिकीर्षीत् प्रजातिकामसत्र मुत्तरं तत्र संव-
त्सराभिप्रयोगो भवति संवत्सरऽ हि प्रजाः पशवो
ऽनु प्रजायन्त इति हि भवतीति तत्रैतान्येव त्रीणि
समस्य निदधात्येव मा तृतीयं पृष्ठाभिप्लवयोर्दश-
रात्रस्येति विकार उपपत्स्यत इति तत्रैके गवामयन
मन्ततः कुर्वन्ति प्रजातिकामसत्रत्वादेतेन वै गावः
प्रजातिं भूमान मगच्छत् प्र जायन्ते बह्वो भव-
न्तीति स्तोमतश्चैव गवामयनानाऽ रोहो भविष्य-
तीति यथैतत्प्रजापतेः सहस्रसंवत्सरं परमां विराज
मुपक्षत मपि वा प्रजापतीष्मा मेवोपक्षतऽ स्यात्तत्र
खलु त्रिवृतं करोति यथान्तरञ्च लघुस्याग्रस्तोमथाग्रं
प्रजापतिरिति ज्योतिष्टोमं तत्र माग्निष्टोमीऽ सऽ-
स्याऽ रथन्तरं पृष्ठं तत्र खलु बृहस्पतिसवं करोत्येषो
ऽग्निष्टोमस्त्रिवृत्स्तोमो रथन्तरपृष्ठो ज्योतिष्टोमतन्त्रो
भवतीति न्यायकॢप्तमुत्तरं न्यायकॢप्तमुत्तरम् ॥ १३ ॥

इति निदानसूत्रे दशमः प्रपाठकः॥ समाप्तोऽयं ग्रन्थः॥